तेषु प्रसिद्धरागैर्विशेषितान् विंशतिं ब्रुवे त्र्यधिकान् २. २६.

The chapter ends with a description of these twenty three *Melas*.

The next chapter deals with *Rāgas*. After giving the division of the *Rāgas* according to different standards, these *Rāgas* are briefly dealt with, giving their *Graha*, *Aṃśa* and *Nyasa*. The last chapter deals with *Rāga* forms. The time when each *Rāga* should be sung, *Nādātma* and *Devamaya Rūpas*, the method of playing on a *Vīṇā*, the Deities of the various *Rāgas*, these are the subjects dealt with in this last chapter.

The book may not have any practical value in understanding modern music. But it has a great value in understanding the condition of the art of music in ancient times in India. The work shows that they were not confined to the purely practical side of the art, but that they tried to analyse and understand the art. The minute way in which points are analysed and examined shows the intellectual keenness of the people.

At present, attempts are being made to study the theory of music. Discussions are going on regarding the correct *lakṣaṇa* of a *Rāga*, about the various kinds of *Śrutis* and their uses in the various *Rāgas* and other details. There will always be a tendency to arrest any considerable deviation from accepted standards of correctness in presenting music. At the same time, geniuses set new standards and they are able to gain adherents. From this point of view, it may be that

science never came up to the pace of the progress of the Art, and in science there is always a sort of tendency to compromise with established standards, rather than to accurately present the Arts as current at the time. Further there is also the possibility that most of the writers on music were more scholars than artists and they interpreted ancient texts from a scholar's point of view, and in spite of their promises of accurately and faithfully representing the Art as it existed at their time, there is a possibility that in their works we find more a presentation of the *S'āstra* as known at that time than of the Art as it was current at that time. As at present, the few fix the standard of taste for the people and it is possible that even in the works of ancient times what we find is not what Art was at that time; it is what the few thought the Art should be. In studying the texts of ancient times, we must have this possibility also in mind. What we are interested in is the science of music as given in such books. I have tried to present the facts of music as they could be studied from the texts.

C. KUNHAN RAJA

---

## सोमनाथेन स्मृता ग्रन्थाः, ग्रन्थकाराश्च

---

ॐ

शिवाभ्यां नमः

# रागविबोधः

## श्रीसोमनाथविरचितः

### स्वकृतया विवेकाख्यटीकया संवलितः

## प्रथमो विवेकः

दक्षिणे लक्ष्मणो यस्य वामे तु जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥ १ ॥
आर्यासूनुसमानं प्रणम्यमानं धरासुरैः प्रवरैः ।
झम्पाम्बयात्तमालं मुद्गलमालम्बदं कलये ॥ २ ॥
गुरुगणपतिविधिपुत्त्रीर्नत्वा निखिलकुलदेवताः स्तुत्वा ।
कुरुते विवृतिं स्वकृतेः सकलकलकुलोद्भवः सोमः ॥ ३ ॥

अथ रागविबोधाभिधं निबन्धं विधित्सुस्तत्प्रतिपाद्यरागमूलभूतश्रुतिस्वरादीनां निदानं नादं समासोक्त्या सूचयञ्शिष्टाचारोपदिष्टमनिष्टनिवारकमिष्टदायकं स्वेष्टदेवतागुरुनमस्कारात्मकं मङ्गलमारचयति—

आर्यानन्दनिदानं गुरुं स्वराधाररागविषयमहम् ।
स्थानविशेषख्यातं गणपतिमतिसिद्धये वन्दे ॥ १ ॥

आर्यानन्देत्यार्यया। गणपतिं गणानां समूहरूपेण ख्यातानां विघ्नानां पतिं नियन्तारं देवमहं वन्दे प्रणमामि। गणपतिशब्दो योगरूढः। किमर्थम्? अतिसिद्धये अन्तरायापायसच्छब्दार्थस्फुरणाभ्यां पूज्या या सिद्धिर्ग्रन्थसमाप्तिस्तस्यै। सामर्थ्यद्योतनाय विशेषणान्याह— आर्यायाः पार्वत्या य आनन्दस्तस्य निदानमादिकारणम्, पुत्रत्वेन महिषासुरादिवधे विघ्नहरत्वेन वेत्यर्थः। तथा च स्मृतिः—

'पार्वत्या महिषासुरप्रमथने सिद्धादिभिर्मुक्तये
ध्यातः पञ्चशरेण विश्वजितये पायात्स नागाननः।' इति।

अत एव गुरुमुत्कृष्टम्। तथा स्वः स्वर्ग आधारो येषां ते स्वराधारा देवाः; तेषां यो रागस्तत्कर्तृकानुरक्तिस्तस्य विषयं गोचरम्। विघ्नाख्यतदरिविधात्तत्प्रेमपात्रमित्यर्थः। तथा तिष्ठन्ति शब्दार्था येषु तानि स्थानानि ग्रन्थाः, तेषां ये विशेषाः श्रुतिपुराणादयः, तेषु ख्यातम्। तथा च—'गणानां त्वा गणपतिं हवामहे' इत्यादिश्रुतयः, 'वेदा विदन्ति न यथार्थतया भवन्तम्' इत्यादिशिवोक्त्यनुवादकस्कान्दपुराणादिपुराणानि च।

यद्वा गणानां प्रमथानां यः पतिर्दक्षिणामूर्तिः शिवः, तमहं वन्दे। कीदृशम्? आर्यानन्दनिदानं पार्वत्याह्लादहेतुम्, तस्यास्तदासक्तत्वात्। अथ वा, आर्याः श्रोत्रिया मुनयः, तेषामानन्दहेतुम्। यतो गुरुं तेषां ज्ञानोपदेष्टारम्। तथा स्वराधाररागविषयम्। स्वः स्वर्गः; तेन तद्गता देवा लक्ष्यन्ते। तेषामाधारमाश्रयं राति ददातीति स्वराधाररः कल्पवृक्षत्वादभीष्टप्रदः। स चासावगो वृक्षो दिव्यवटश्च। स विषयो यस्य तम्। तन्मूलनिवासिनमित्यर्थः। तथा स्थानविशेष आगमवर्णिते हिमाचलतटे ख्यातं तपसा प्रसिद्धम्। अतिसिद्धय इति पूर्ववत्। तथा च दक्षिणामूर्तिध्याने शारदातिलकवचनम्—

'वटविटपिसमीपे भूमिभागे निषण्णं
सकलमुनिजनानां ज्ञानदातारमारात्।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं
जननमरणदुःखच्छेददक्षं नमामि॥' इति॥

यद्वा गणस्य जीवसमूहस्य यः पातीति पतिः सत्त्वगुणेन रक्षकः, तं विष्णुं वन्दे । कीदृशम् ? अर्यः स्वाम्यात्मैव भक्तिः सेव्यो येषां त आर्या आत्मभक्ताः, तेषामानन्दहेतुम् । तथा गुरुं श्रेष्ठम् । तथा स्वरां सावित्रीं दधाति पुष्णातीति स्वराधो ब्रह्मा । तस्यारमरिसमूहो मधुकैटभाख्यौ शङ्खासुरश्च । तत्र मधुकैटभयोर्ब्रह्मवधोद्यतत्वात्तच्छत्रुत्वम्, शङ्खासुरस्य तु तत्प्रियवेदहारित्वात्तथात्वं ज्ञेयम् । तत्र रागो मात्सर्यं यस्य सः । तद्घातक इति यावत् । स चासौ विषमुदकं समुद्ररूपं याति नारायणरूपेण मत्स्यरूपेण च प्राप्नोतीति विषयः स च तम् । तथा तिष्ठत्यस्मिन्निति स्थानं वाहनं शयनं च । तथाभूतौ च तौ विशेषौ च; विः पक्षी गरुडः, शेषो ऽनन्तश्च ; ताभ्यां ख्यातः प्रसिद्धस्तम् । अत्र गणपतिशब्दो विशेषणबलाद्विष्णुवाचको ज्ञेयः ।

अथ वा, आर्यान् , अम् , दनिदानम् इति पदच्छेदः । अहम् अं विष्णुं वन्दे । कीदृगहम् ? आर्यैः सज्जनैः कृत्वा अनिति प्राणिति जीवतीत्यार्यान् । सज्जनानुगृहीत इत्यर्थः । अथ वा आर्यानमति प्राप्नोतीत्यार्यान् । सज्जनसेवीत्यर्थः । विष्णोर्गुरुत्वं स्फुटयति—कीदृशम् अम् ? दनिदानम् । दो वह्निश्चासौ निदानमादिकारणं च तादृशम् । तत्र गणपतिमित्यनेन जगतः पालकत्वम्, दमित्यनेन प्रलयानलतया जगत्संहारकत्वम् , निदानमित्यनेन तत्सर्जकत्वं च सूचितम् । शेषं पूर्ववत् ।

यद्वा गुरुं मुद्गलाख्यं जनकमुपदेष्टारं च वन्दे । कीदृशम् ? आर्येषु सज्जनेष्वानन्दं नयति प्रापयतीत्यानन्दनि । तादृशं दानं त्यागो यस्य तम् । पात्रे सन्मानपुरःसरं त्यागिनमित्यर्थः । तथा स्वराधाररागस्य पूर्ववद्देवकर्तृकानुरागस्य विषया महा यज्ञाद्युत्सवा यस्य तम् । देवहृदयंगमसाङ्गयागाद्युत्सवकारिणमित्यर्थः । तथा स्थानेन स्थित्या सद्व्यवहारेण विशेषख्यातं विशेषतः प्रसिद्धम् । अथ वा स्थानेषु सादृश्येषु ये विशेषा उत्कर्षाः, देवतासादृश्यानीति यावत् , तैः ख्यातम् । तथा च मत्पद्यम् ;

'तुन्देनोन्दुरुयानमाननरुचा चन्द्रं महेन्द्रं श्रियो-
पेन्द्रं पालनतो गिरा सुरगुरुं सर्वज्ञभावाच्छिवम् ।

वेदाधारतया विधिं निधितया भासां रविं भावय-
न्नेवं देवमयं गुरुं कुरु चिरं चित्ते स्थिरं मुद्गलम् ॥' इति ॥

तथा गणानां जनसमूहानां पतिं पातारम्; बहुविधपरिवारपालिनमित्यर्थः। अति-सिद्धय इति पूर्ववदेव। इति प्रस्तुतवाच्यपक्षे ॥

अथाप्रस्तुतनादपक्षे तु, अहं वन्दे तत्प्रशंसां करोमीत्यर्थः। किमर्थम्? अतिसिद्धये महते ऽभ्युदयाय;

'नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः।
भवन्त्युपासिता नूनं यस्मादेते तदात्मकाः' ॥ (सं० १-३-२)

इति शार्ङ्गदेवोक्तेर्नादस्तुतिर्ब्रह्मादिस्तुतिरिव महाभ्युदयहेतुरित्यर्थः। तदेव विवृणोति—आर्याणां विदुषां य आनन्द ऐहिकामुष्मिकं च सुखं तस्य निदानम्। तत्र नादस्यैहिकसुखहेतुत्वम्—

'सुखिनि सुखनिदानं दुःखितानां विनोदः
श्रवणहृदयहारी मन्मथस्याग्रदूतः।
अतिचतुरसुगम्यो वल्लभः कामिनीनां
जयति जगति नादः पञ्चमश्चोपवेदः ॥'

इति शिष्टोक्तेः। आमुष्मिकसुखहेतुत्वं तु;

'गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥'

इति स्कान्दपुराणादिभ्यः। ननु तदानन्दकत्वं स्वररागादि साध्यम्; तत्किमागतं नादमात्रस्येत्याशङ्क्य नादं विशिनष्टि—स्वरेति। स्वर आधारो येषां ते च ते रागाः श्रीरागवसन्तादयः; तेषां विषय आधारस्तम्। अथ वा स्वराधारः सन्रागविषयश्च तम्। नादमूलकमेव स्वररागादिकमित्यर्थः। नादस्य स्वरादीनां च तादात्म्येऽपि 'भूमौ भित्तिः' इत्यादिवत्सामान्यविशेषयोरप्याधाराधेयभावः संगच्छते। तेन नाद एव स्वरादिरूपनानात्वभाक्सन्सुखहेतु-

रुचित एवेति भावः। तथा स्थानविशेषा हृत्कण्ठमूर्धरूपाः; तेषु ख्यातो मन्द्रमध्यतारनामभिः प्रसिद्धस्तम्। 'रागस्तु रक्तौ मात्सर्ये'; 'गणः समूहे प्रमथे' इति च विश्वः। 'शैलवृक्षौ नगावगौ' इत्यमरः। 'अर्यः स्वामिनि वैश्ये च'; 'विषं तु गरले तोये' इति च विश्वः। 'विहगे गगने च विः' इति माधवीयनिघण्टुः। 'दः पुमान्वह्निदात्रोः स्यात्' इति च स एव। 'मह उद्धव उत्सवः' इत्यमरः। 'स्थानं स्थितौ च सादृश्ये' इति विश्वः। पक्षे आधारर इति रातेर्दानार्थात्, स्वराध इति दधातेः पोषणार्थात्, विषय इति यातेः प्राप्त्यर्थाच्च 'आतो ऽनुपसर्गे कः' (३-२-३) इति कः। आर्य इति 'सो ऽस्य भक्तिः' (४-३-९९) इत्यण्। भज्यत इति भक्तिरिति कर्मार्थः। तत्र अर्य इति स्वामिन्यर्थे 'अर्यः स्वामिवैश्ययोः (३-१-१०३) इति निपातः। आर्यानिति 'अनप्राणने' (धा० ११७६) अस्मात्क्विप्। 'अहन्' (८-२-६८) इति सामान्यज्ञापकान्नलोपाभावः। 'एकाजुत्तरपदे णः' (८-४-१२) इति प्राप्तस्य नित्यणत्वस्य 'पदान्तस्य' (८-४-३७) इत्यनेन निषेधः। पक्षे अमतेः 'मोनो धातोः' (८-२-६४) इति नः। पक्षे आनन्दनीति क्विबन्तस्य दानविशेषणत्वेन नपुंसकत्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१-२-४७) इति ह्रस्वः। अत्र प्रस्तुतस्य गणेशस्य दक्षिणामूर्तेर्विष्णोर्गुरोर्वोभयार्थैरार्यानन्दादि-विशेषणैरप्रस्तुतस्य नादादेश्च संक्षेपेण कथनात्समासोक्तिरलंकारः; 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' (१०-११) इति काव्यप्रकाशलक्षणात्। अस्यार्थः— प्रकृतार्थप्रतिपादकेन वाक्येन श्लिष्टविशेषणसामर्थ्याद्यदप्रस्तुतस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात्समासोक्तिरिति ॥ १ ॥

अथ तादृशमेव नादमर्थश्लेषरूपेण प्रकारान्तरेण सूचयन्सुशब्दापशब्दार्थ-स्फुरणकारणं सरस्वतीस्मरणमाचरति—

**हेतुर्जगद्व्यथवहृतेर्विराजयन्ती स्वयोगतो वीणाम्।**
**जयति व्यापनशीला शब्दात्मब्रह्मशक्तिः सा ॥ २ ॥**

हेतुर्जगद्व्यथवहृतेरित्यार्यया। सा प्रसिद्धा शब्दात्मब्रह्मशक्तिः। शब्दात्मा वर्णपदवाक्यस्वरूपा शब्देष्वात्मबुद्धिर्यस्या इति वा। शब्दाभिमानिनीति यावत्।

सा चासौ ब्रह्मणो विरिञ्चेः संबन्धिनी शक्तिर्देवता च। संबन्धो ऽत्र जन्यजनकभावरूपः। सा जयत्युत्कर्षेणास्ते। अनेनेयमुपास्येति सूचितम्। सर्वोत्कर्षमेवाह—जगद्व्यवहृतेस्त्रैलोक्यव्यवहारस्य हेतुः। लोकव्यवहारस्य शुब्दमूलत्वादित्यर्थः। यतो व्यापनशीला सर्वत्र प्रचरन्ती। तथा स्वयोगतः स्वाङ्गसङ्गेन वीणां विपञ्चीं कच्छपीसमाख्यां विराजयन्ती शोभयन्ती। न तु वीणया तस्याः शोभेत्यर्थः; इति प्रस्तुतसरस्वतीपक्षे॥

अथाप्रस्तुतनादपक्षे—सा प्रसिद्धा शब्दात्मा नादस्वरूपा ब्रह्मणः परमात्मनः शक्तिः सामर्थ्यविशेषो जयति। अनेनापि नाद उपासनीय इति सूचितम। तथा च शार्ङ्गदेवः—

'नादब्रह्म चिदानन्दमद्वितीयमुपास्महे'। (सं० १-३-१) इति।

उत्कर्षमेव तस्या आह—जगद्व्यवहृतेर्हेतुरिति; नादस्य वर्णपदवाक्यानां व्यञ्जकत्वात्सर्वो ऽपि लोकव्यवहारो नादमूल एवेति भावः; तथा च स एव—

'नादेन व्यज्यते वर्णः पदं वर्णात्पदाद्वचः।
वचसा व्यवहारो ऽयं नादाधीनमतो जगत्॥' (सं० १-२-२) इति।

तथा व्यापनशीला सर्वलोकव्यापिका। पुनः स्वयोगतो निजाविर्भावसंबन्धेन वीणां विराजयन्ती। वीणामिति नादप्रकाशविषयाणां देहमात्राणां वाद्यमात्राणां चोपलक्षणम्। नादेन विना तेषां काष्ठलोष्ठादिवद्वैयर्थ्यमिति भावः। नादस्य परमात्मशक्तित्वे ससंमतिका कल्लिनाथोक्तिः—'चैतन्यं सर्वभूतानाम्—' इत्यस्य व्याख्यावसरे; "परावाक्पर्यायस्य ब्रह्मशक्तेर्नादस्य ब्रह्मणो ऽत्यन्तप्रत्यासन्नत्वात्तदुपासनायां कृतायां ब्रह्मप्राप्तिर्मणिप्रभाप्रवृत्तस्य मणिलाभवद्भवेदिति। तथाचोक्तम्—

'अतो गीतप्रपञ्चस्य श्रुत्यादेस्तत्त्वदर्शनात्।
अपि स्यात्सच्चिदानन्दरूपिणः परमात्मनः॥
प्राप्तिः प्रभाप्रवृत्तस्य मणिलाभो यथा भवेत्।
प्रत्यासन्नतयात्यन्तं . . . . . . . .॥' इति॥"

‘विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती ।
महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी ॥’

इति वैजयन्ती । ‘आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु’ इति विश्वः । अत्र समानविशेषणेन वाक्येन शब्दात्मब्रह्मशक्तिरित्यनेकार्थविशेष्यतया सरस्वतीरूपप्रस्तुतार्थादन्यो नादरूपो ऽप्रस्तुतो ऽर्थो गम्यत इत्यविशेषश्लेषनामार्थश्लेषः । तथा च रुद्रटः—

‘अविशेषश्लेषी ऽसौ विज्ञेयो यत्र वाक्यमेकस्मात् ।
अर्थादन्यं गमयेदविशिष्टविशेषणोपेतम् ॥’ (१०-३) ॥ २ ॥

इदानीं ग्रन्थकृत्कुलपितामहपितृस्वनामख्यापनपूर्वं चिकीर्षितं प्रतिजानीते—

**सकलकलोपाख्यकुलः संख्यावन्नाथमेङ्गनाथजनेः ।**
**मुद्गलसूरेस्तनुजस्तनुधीरपि सोमनामाहम् ॥ ३ ॥**
**रागविबोधं विदधे विरोधरोधाय लक्ष्यलक्षणयोः ।**
**प्राचां वाचां किंचित्सारं सारं समुद्धृत्य ॥ ४ ॥**

सकलकलेति रागविबोधमित्यार्यायुग्मेन । रज्जन्ति तल्लीना भवन्त्येभिरिति रागाः, ते विबुध्यन्ते ज्ञायन्ते येन यस्मिन्वेति रागविबोधः । तं ग्रन्थमहं विदधे रचयामि । कीदृशो ऽहम् ? सकलकलेत्युपाख्या अवान्तरनामधेयं यस्य तत्कुलं यस्य सः । तथा संख्यावतां पण्डितानां नाथादीश्वरान्मेङ्गनाथाज्जनिर्जन्म यस्य तस्य मुद्गलसूरेर्मुद्गलाख्यपण्डितस्य तनुजः पुत्रः । तथा सोमनामा । तनुधीरप्यल्पबुद्धिरपि । अल्पमतिना कथं वा नवीनग्रन्थो निर्मेय इत्यत आह—प्राचामिति । प्राचीनानां हनुमन्मतङ्गनिःशङ्कादीनां या वाचो ग्रन्थरूपास्तासां किंचित्सारं सारं मुख्यमुख्यांशं समुद्धृत्य संगृह्य । तद्वागनुसारितया मम न नवीनग्रन्थनिर्माणे प्रयास इत्यर्थः । तर्हि सत्सु तन्निबन्धेषु किमनेनेत्यत आह—लक्ष्यं लोकगेयं रागादि; लक्षणं तत्प्रकाशकं शास्त्रम्; तयोर्यो विरोधोऽन्यत्वाभासस्तस्य रोधाय निवारणाय । सत्यं सन्ति महान्तः प्राचीनग्रन्थाः । परं तु तदाशयानव-

बोधेन लक्ष्याणामन्यथात्वमाभाति। ततस्तत्परिहारेण तयोरैक्यायेति भावः। 'संख्यावान्पण्डितः कविः,' 'जनिरुत्पत्तिरुद्भवः;' 'धीमान्सूरिः' इत्यमरः। मेङ्गनाथजनेरिति वैयधिकरण्येऽपि शब्दशक्तिस्वाभाव्येन गमकत्वाद्बहुव्रीहिः। 'समानाधिकरणानां बहुव्रीहिरिष्यते' इति तु नेष्टिः। किं तु अभिधानलक्षणाः कृत्तद्धितसमासा भवन्ति इति न्यायागत एवार्थः। तेन वैयधिकरण्ये ऽपि गमकत्वे कण्ठेकाल इत्यादौ भवति, न तु पञ्चभिर्भुक्तमस्येति पञ्चभुक्त इति। तथा च वामनसूत्रम्; '—वैयधिकरण्ये बहुव्रीहिर्जन्माद्युत्तरपदः' (५-२-१९) इति। राग इति विबोध इति च 'अकर्तरि च कारके संज्ञायाम्' (३-३-१९) इति करणे ऽधिकरणे वा घञ्। अत्र रागविबोध इत्यस्य संज्ञात्वाद्विबोधमात्रस्यासंज्ञात्वे ऽपि चात् असंज्ञायामित्युक्तेर्न दोषः। अत्र आर्याद्वयेऽपि व्यञ्जनानामसकृदावर्तनाद्वृत्त्यनुप्रासः शब्दोऽलंकारः, 'एकस्याप्यसकृत्परः' (९-२) इति काव्यप्रकाशलक्षणात्; एकस्य अपिशब्दादनेकस्यापि व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रास इति। एवमग्रेऽपि ज्ञेयम्॥ ३-४॥

एवं सनाम चिकीर्षितं प्रतिज्ञाय मङ्गलकारि पार्वतीकीर्तनमधिकश्लेषेण सूचयन्ग्रन्थनिबन्धनं छन्दः सभेदं प्रकाशयति—

पथ्याख्यार्यैवास्यां मम वाण्यां जयति तु विपुलाख्यास्पृक्।
यदनुग्रहादभीष्टाः सर्वे ऽर्था अत्र सिद्ध्येयुः॥ ५॥

पथ्याख्येत्यार्यया। पथ्याख्या पथ्येतिनाम्नी, आर्यैवार्याख्यं मात्राच्छन्द एव, अस्यां ग्रन्थरूपायां मम वाण्यां जयत्युत्कर्षेणास्ते। न तु वर्णच्छन्दो नाप्यन्यन्मात्राच्छन्द इत्यर्थः। न केवलं पथ्याख्येत्याह। कीदृक्? तु पुनः, विपुलाख्यां स्पृशत्यादत्त इति तत्स्पृक्। स्पर्शनोक्त्या विपुलाल्पता सूचिता। बाहुल्यं तु पथ्याया एव। आर्ययैव निबन्धने हेतुमाह—यदनुग्रहाद्यत्कर्मकाङ्गीकारात्, अत्र ग्रन्थे, अभीष्टाः प्रतिपादयितुमिष्टाः सर्वे ऽर्था अभिधेयानि सिद्ध्येयुः शब्दप्रकाश्यानि भवेयुरिति प्रौढ्या संभावनम्। सरिगमेत्यादिबहुतमकेवललघ्वक्षरमयानि च्छन्दोनिबद्धानि वक्ष्यमाणरागरूपाणि नान्यच्छन्दःसु समावेशार्हाणीत्यर्थः। इति प्रस्तुतार्थः॥

अथाप्रस्तुतपक्षे, आर्या पार्वत्येव मद्वाच्युत्कर्षेणास्ते । तन्नामैव कीर्तयामीत्यर्थः । यतः पथ्या हितावहा आख्या नाम यस्याः । पुनर्विपुलाख्यास्पृग्बहुतमनामधारिणी । तस्या एव भजने हेतुमाह—यदिति । यत्कर्तृकाङ्गीकाराच्चतुर्विधाः पुरुषार्था अत्र जगति भक्ते वा सिद्ध्येयुर्निष्पद्येरन् । अत्रार्याच्छन्दसि पूर्वार्धे चतुर्मात्राः सप्त गणा अन्ते गुरुरेकः । विषमस्थाने जगणो न । षष्ठे जगणो लघुचतुष्टयं वा भवति । एवमेवोत्तरार्धम्, परं तु षष्ठे लघुरेक एव । एवं सप्तपञ्चाशन्मात्रात्मिका आर्या । अस्यां पूर्वार्धे षष्ठे लघुचतुष्टये सति द्वितीयलघ्वादिकं पदं भवति । तत्रैवार्धे सप्तमे तु लघुचतुष्टये प्रथमलघुतः पदं भवति । उत्तरार्धे तु पञ्चमे लघुचतुष्टये प्रथमलघुत एव पदम् । एवं सति दलद्वये ऽप्याद्यासु द्वादशसु मात्रास्वेव पदपूर्तौ पथ्या भवति । विपुला तु पूर्वार्धे वा दलद्वये वाद्यद्वादशमात्रोल्लङ्घनेन पदविच्छेदे भवति । तथा च **'स्वरा अर्धं चार्यार्धम्'** (४-१४) इत्यारभ्य 'विपुलान्या' (४-१३) इत्येतदन्तानि दश पिङ्गलसूत्राणि । स्पृगिति 'स्पृशो ऽनुदके क्विन्' (३-२-९८) इति क्विनि 'क्विन्प्रत्ययस्य कुः' (८-२-६२) इति कुत्वम् । सिद्ध्येयुरिति 'संभावने ऽलमिति चेत्सिद्धाप्रयोगे' (३-३-१५४) इति लिङ् । अत्रेदं वाक्यमनेकार्थविशेषणं सत्प्रकृताच्छन्दोरूपादर्थादुत्कृष्टं पार्वतीरूपमर्थान्तरं बोधयतीत्यधिकश्लेषाख्यो ऽलंकारः ;

'यत्राधिकमारब्धादसमानविशेषणं तथा वाक्यम् ।
अर्थान्तरमवगमयेदधिकश्लेषः स विज्ञेयः ॥' (१०-७)

इति रुद्रटलक्षणात् ॥ ९ ॥

अत्र रागविबोधं विदध इति प्रतिज्ञया रागप्रतिपादने ऽर्थप्राप्ते सति रागाणां च गीतरूपत्वात्तद्द्वैविध्यं मार्गदेशीभेदाभ्यामाह—

**गीतं द्वेधा मार्गो देशी मार्गः स यो विरिञ्च्याद्यैः ।**
**अन्विष्टो भरताद्यैः शंभोरग्रे प्रयुक्तो ऽर्च्यः ॥ ६ ॥**

**गीतं द्वेधेति** । मार्गं लक्षयति—**मार्गः स** इति । मार्ग्यते ऽन्विष्यत इति मार्गः । यो विरिञ्च्याद्यैर्ब्रह्मादिभिरन्विष्टो गवेषितः । सामवेदात्क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याख्यान्सप्त स्वरान्संगृह्य प्रवर्तित इत्यर्थः । तथा च निःशङ्कः—

'सामवेदादिदं गीतं संजग्राह पितामहः'। (सं० १-१-२५) इति।

भरताद्यैः शंभोरग्रे प्रयुक्तश्च; अत एवाच्यों ऽभ्युदयहेतुत्वात्पूज्यः। यद्यपि गीतवाद्यनृत्यानां त्रयाणामपि प्राच्यैर्मार्गदेशीत्वे उक्ते; तथापीह गीतस्यैवोपयोगात्तस्यैवोक्तिः। मार्ग इति 'मार्ग अन्वेषणे' (चु० १७४८) इत्यस्मात्कर्मणि घञ्॥६॥

देशीं लक्षयति—

**देशे देशे रुच्या यज्जनहृद्रञ्जनं तु सा देशी।**
**स तु लोकरुचिविकलितः प्रायो लक्ष्यात्र देशी तत्॥ ७॥**

देशे देश इति। यत्तु, गीतमित्यर्थात्, देशे देशे रुच्या तत्र तत्र परिचयतो ऽनुरक्त्या जनहृद्रञ्जनं लोकहृदयाह्लादकं सा देशी। तथा च कल्लिनाथः— 'देशीति देशशब्देन तत्रत्या जना लक्ष्यन्ते, तैर्यथेच्छं क्रियमाणायां गीतादिक्रियायामाचार्यकृता संज्ञा' इति। देशीति पृषोदरादित्वात्साधुता। यद्गीतं सा देशीति; 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यं प्रतिपादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गभाञ्जि भवन्ति' इति प्रतिनिर्दिश्यमानदेशीलिङ्गता तच्छब्दस्य। एवं भेदद्वयं लक्षयित्वा तत्र देश्या एव बाहुल्येनात्र प्रतिपाद्यत्वं सहेतुकमाह—स त्विति। स मार्गः प्रायो यतो लोकरुचिविकलितः, लोकानां रुच्यालापादिविहीनः कृतः। यदिति तद्योगात्। तत्ततो ऽत्र देशी; प्रायोग्रहणात्कचित्कचिन्मार्गो ऽपीत्यर्थः। प्रायःपदं देहलीदीपन्यायेनोभाभ्यां संबध्यते। तथा च बृहद्देश्यां मतङ्गः—

'अबलाबालगोपालैः क्षितिपालैर्निजेच्छया।
गीयेते यानुरागेण स्वदेशे देशिरुच्यते॥
निबद्धश्चानिबद्धश्च मार्गो ऽयं द्विविधो मतः।
आलापादिनिबद्धो यः स च मार्गः प्रकीर्तितः॥
आलापादिविहीनस्तु स च देशी प्रकीर्तितः।' इति।

कल्लिनाथो ऽपि रागविवेकाध्यायव्याख्याने—'देशीत्वं च तत्तद्देशमनोरञ्जनैकफलत्वेन कामचारप्रवर्तितत्वम्। नियमे तु सति तेषां गीतादीनां मार्गत्वमेव' इति॥ ७॥

अथ ग्रन्थे विवक्ष्यमाणान्पदार्थान्संगृह्णाति—

अत्र श्रुतिस्वराद्या वीणाभेदाः स्वसंख्यया मेलाः ।
रागास्तद्रूपाणि च पञ्चविवेक्या क्रमाज्ज्ञेयम् ॥ ८ ॥

अत्र श्रुतिस्वराद्या इति । अत्र ग्रन्थे । पञ्चविवेक्या ; विविच्यन्ते प्राकरणिकपदार्था येष्विति विवेकाः ; पञ्चभिर्विवेकैरध्यायसर्गादिवदवच्छेदकभेदैः । क्रमाज्ज्ञेयम् ; ज्ञेयाश्च ज्ञेयानि चेति । तत्र प्रथमविवेके श्रुतयः स्वराश्चाद्या येषां ते पदार्था ज्ञेयाः । आद्यपदेन श्रुतिज्ञानोपायः, स्वराणां शुद्धत्वविकृतत्वे, मन्द्रत्वादि, वादिविवादित्वादि, ग्रामलक्षणम्, मूर्छना, क्रमः, षाडवितौडुविते, शुद्धतानकूटतानाः, प्रस्तारादि, वर्णभेदाः, चतुस्त्रिंशदलंकाराः, ग्रहांशन्यासाश्चेत्येषां संग्रहः । द्वितीयविवेके तु वीणाभेदाः, वीणा च तस्या भेदाः शुद्धमेलेत्यादयश्च ते । तृतीये तु स्वसंख्यया, सहेत्यार्थात्, मेलाः, मिलन्ति वर्गीभवन्ति रागा येष्विति तदाश्रयभूताः स्वरसंस्थानविशेषाः । थाटेति भाषायाम् । अत्र संख्याग्रहणेन प्रस्तारनष्टोद्दिष्टान्यप्युपलक्ष्यन्ते । तेन मेलसंख्याप्रस्तारनष्टोद्दिष्टानि मेलाश्चेत्यर्थः । ते ज्ञेयाः । चतुर्थे तु रागा ज्ञेयाः । ग्रहादिषाडवत्वादितत्तत्कालगेयत्वैर्युक्ता इति शेषः । पञ्चमे तु तद्रूपाणि, तेषां रागाणं रूपाणि लक्ष्यप्रसिद्धनादमयानि देवतामयानि च स्वरूपाणि ज्ञेयानि । मेलेति विवेकेति चाधिकरणे 'अकर्तरि च—' इति घञ् । पञ्चविवेकीति समाहारे द्विगौ 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' (वा० १५५६) इति स्त्रीत्वात् 'द्विगोः' (४-१-२१) इति ङीप् । ज्ञेयमिति 'नपुंसकमनपुंसकेन—' (१-२-६९) इत्येकशेषे पाक्षिक एकवद्भावः ॥ ८ ॥

ननु रागविबोधायारब्धे ग्रन्थे भवतु नामैवं वस्तुसंग्रहः, परं तु रागैरेव किं विबोध्यमानैरित्याशङ्क्य, आद्यपद्यद्वयेन सूचितं प्रतिपाद्यरागरूपं नादमुपास्यतया विधत्ते—

पुरुषार्थसार्थसिद्ध्यै सिषेवयिषुरपि विरिञ्चिहरिगिरिशान् ।
नादमुपासीत सुधीर्यदिमे गदितास्तदात्मानः ॥ ९ ॥

पुरुषार्थेति । पुरुषार्थानां सार्थः समूहस्तस्य सिद्धिः प्राप्तिस्तदर्थं सुधीर्नादमुपासीत । ननु धर्मादिसिद्धये प्रसिद्धब्रह्मादिदेवानेव सेवतामित्यत आह—**सिषेवयिषुरपि विरिञ्चिहरिगिरिशानिति** । ब्रह्मादीन्सेवितुमिच्छुरपि नादमेव सेवेतेत्यर्थः । यद्यत इमे विरिञ्च्यादयस्तदात्मानो नादादभिन्ना गदिताः प्राचीनैरुक्ताः । भक्तैर्युगपत्त्रयः सेवितुमशक्या इत्येकस्मिन्नाद उपासिते नादात्मकत्वात्तेषां त्रयोऽप्युपासिता भवन्तीति भावः । सुधीरिति पदेनेदमेव सूचितम् । तथा च शार्ङ्गदेवः—

'नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः ।
भवन्त्युपासिता नूनं यस्मादेते तदात्मकाः ॥' (सं० १-३-२) इति ।

'सार्थो वणिक्समूहे स्यात्तथा संघातमात्रके' इति विश्वः ॥ ९ ॥

एवं नादोपास्तिविधिना रागजिज्ञास्यतां साधयित्वा नादाभिव्यक्तिक्रममाह—

**आत्मेरयति विवक्षुश्चित्तं तद्देहवह्निमाहन्ति ।**
**स प्रेरयते दीप्त्या ब्रह्मग्रन्थिस्थितं मरुतम् ॥ १० ॥**
**ऊर्ध्वं विचरन्क्रमतो नाभिहृदयकण्ठमूर्धवक्त्रे सः ।**
**अतिसूक्ष्मादिकसंज्ञान्नादांस्तनुते ऽत्र गानार्हाः ॥ ११ ॥**
**हृत्कण्ठमूर्धनादाः क्रमादमी मन्द्रमध्यताराख्याः ।**
**द्विगुणा यथोत्तरं च श्रुतितां स्वरतां च वच्म्येषाम् ॥ १२ ॥**

आत्मेरयतीत्यारभ्य नादांस्तनुत इत्यन्तेन ग्रन्थेन । विवक्षुर्वक्तुमिच्छुरात्मा जीवश्चित्तं मन ईरयति प्रेरयते । तन्मनो देहवह्निमुदर्यवह्निमाहन्ति ताडयति प्रबोधयति । स वह्निर्ब्रह्मग्रन्थिस्थितम्, आधाराख्यचक्राद्दूर्ध्वं द्व्यङ्गुलान्तरेण देहमध्यं नाम चक्रं ततो ऽप्यूर्ध्वं नवाङ्गुलान्तरेणोत्सेधायामयोश्चतुरङ्गुलो नाभिकंदः, स ब्रह्मग्रन्थिरुच्यते, तत्स्थितं मरुतं दीप्त्योष्मणा प्रेरयते तत ऊर्ध्वं चालयति । तथा चोक्तो ब्रह्मग्रन्थिर्निःशङ्केन 'आधाराद् द्व्यङ्गुलात्' (सं० १-२-१४५) इत्यारभ्य 'ब्रह्मग्रन्थिरिति प्रोक्तः' (१-२-१४७) इत्यन्तेन । स मरुच्च क्रमादूर्ध्वं विचरन्प्रसरन्सन्नाभिहृदयकण्ठमूर्धवक्त्रे पञ्चसु नाभ्यादिस्थानेषु क्रमतो ऽतिसूक्ष्मा-

दिकसंज्ञान् अतिसूक्ष्मसूक्ष्मपुष्टापुष्टकृत्रिमाख्यान्नादांस्तनुते प्रकाशयति। क्रमत इत्युभयत्र संबध्यते। नाभावतिसूक्ष्म इत्याद्ययं निःशङ्कमतेन क्रमः। मतङ्गमते तु—

‘सूक्ष्मश्चैवातिसूक्ष्मश्च व्यक्तो ऽव्यक्तश्च कृत्रिमः।
सूक्ष्मनादो गुहावासी हृदये चातिसूक्ष्मकः ॥’

इत्याद्युक्तम्। नादानिति नाभ्याद्याश्रयभेदाद्बहुवचनम्। वक्त्र इति प्राण्यङ्गत्वात् ‘द्वंद्वश्च प्राणि—’ (२-४-२) इत्येकवत्। अथ पञ्चानामपि सामान्येन गीतोपयोगित्वे प्राप्ते हृत्कण्ठमूर्धस्थानेष्वेव वक्ष्यमाणश्रुतिपदभूतनाडीसत्तया तत्रत्यत्रयाणामेव गीतोपयोगितामाह—अत्र गानार्हा हृत्कण्ठमूर्धनादा इति। अत्र, एष्वित्यर्थः। शिष्टं स्पष्टम्। अथैतेषामेव त्रयाणां नामान्तराणि स्वरूपभेदं चाह—**क्रमादमी मन्द्रमध्यताराख्या द्विगुणा यथोत्तरं** चेति। अमी हृत्कण्ठमूर्धनादा एव क्रमान्मन्द्राद्याख्या यथोत्तरं द्विगुणाश्च, हृन्नादो मन्द्रः, कण्ठनादो मध्यः, मूर्धनादस्तार इति, द्वौ गुणावुच्चारणप्रयत्नेौ येषां ते द्विगुणाः, यथोत्तरमुत्तरोत्तरम्। मन्द्राख्याद्धृन्नादादुत्तरो मध्याख्यः कण्ठनादो द्विगुणप्रयत्नसाध्यत्वाद्द्विगुणः, तथा तस्मादुत्तरस्ताराख्यो मूर्धनादस्तस्मात्तथैव द्विगुण इत्यर्थः। यथोत्तरमिति ‘यथासादृश्ये’ (२-१-७) इति वीप्सायामव्ययीभावः। एवं पञ्चसु त्रयाणां गानोपयोगितां नामान्तराणि स्वरूपभेदं चोक्त्वा नादानां श्रुतिभावं स्वरभावं च प्रकाशयितुं प्रतिजानीते—श्रुतितां स्वरतां चेति। एषां स्थानत्रयभेदभिन्ननादानां श्रुतिरूपत्वं स्वररूपत्वं च यथा तथा वच्मीत्यर्थः ॥ १०—१२ ॥

तत्र प्रथमोद्दिष्टां श्रुतितां हृदये विवृणोति—

**हृद्यूर्ध्वनाडिकास्थद्वाविंशत्यणुतिरोजनाडीषु।**
**तावन्तः श्रुतिसंज्ञाः स्युर्नादाः परपरोच्चोच्चाः ॥ १३ ॥**

हृद्यूर्ध्वेति। हृद्यूर्ध्वा या नाडिका सुषुम्णा, ऊर्ध्वे वा ये नाडिके इडापिङ्गले, तत्स्थास्तत्संलग्नाश्च ता द्वाविंशतिर्द्वाविंशतिसंख्याका अणवः सूक्ष्मास्तिरोजास्तिरश्चीनाश्च या नाड्यः सच्छिद्रनालिकास्तासु तावन्तो द्वाविंशतिर्नादाः। मरुदाघाताभिव्यक्ता इति शेषः। श्रुतिसंज्ञाः श्रुतिरिति संज्ञा नाम येषां ते स्युः।

कीदृशा नादाः? परपरोच्चोच्चाः, परपरे उच्चोच्चा येषु ते। यद्वा परस्मात्परः परपरः, उच्चादुच्च उच्चोच्चः, परपर उच्चोच्चो येषु ते। प्रथमात्परो द्वितीय उच्चस्ततो ऽपि परस्तृतीय उच्चोच्च इत्यर्थः। एवं द्वाविंशतितमं यावत्। परेभ्यः परे उच्चेभ्य उच्चा इति वा। वायुः सोपानपरंपरामिव सच्छिद्रनालिकाद्वाविंशतिमारोहन्नुच्चोच्चतया परस्परविलक्षणा द्वाविंशतिसंख्या एव श्रुतीस्तनोतीति भावः। परपरोच्चोच्चा इति पक्षे वीप्सायां द्वित्वम्, द्वितीयपक्षे ऽपि 'पञ्चमी' (२-३-४२) इति योगविभागात्समासः, बहुलोक्तेर्वा ॥ १३ ॥

एवं हृदय उक्तमर्थं कण्ठे मूर्धनि चातिदिशति—

**एवं गले च शीर्षे ताभ्यः सप्त स्वराः श्रुतिभ्यः स्युः।**
**स्वरता तेषु निरुक्ता मनः स्वतो रञ्जयन्तीति ॥ १४ ॥**

**एवं गले च शीर्ष** इति। यथा हृदि नाडीसद्भावात्तादृशश्रुतिद्वाविंशतेरुद्भव एवमनयोरपीत्यर्थः। एवं प्रथमोद्दिष्टं श्रुतिभावं व्याख्याय पश्चादुद्दिष्टं स्वरभावं नादानां विवृणोति—**ताभ्यः सप्तेति**। ताभ्यो द्वाविंशतिसंख्याभ्यः श्रुतिभ्यः सप्त स्वराः स्युः। यद्वा ताभ्य इत्यस्य शास्त्रान्तरप्रसिद्धाभ्य इत्यर्थाच्छ्रूयन्त इति श्रुतय इति कर्मणि निरुक्तिः सूचिता। तेन श्रवणयोग्या एव श्रुतय इति। यद्यपि श्रवणयोग्यता ऽनुरणनात्मकस्य स्वराख्यस्य दीर्घस्य ध्वनेरपि वर्तते, तथापि मारुतनखाद्याघातानन्तरप्रथमक्षणवर्तिश्रवणमात्रयोगित्वमिह गृह्यते। इदानीं स्वरशब्दस्य व्याख्यामाह—**स्वरता तेष्विति**। तेषु सप्तसु नादविशेषेषु स्वरता स्वरभावो निरुक्तो व्याख्यातः। कथम्? मनः श्रोतृचित्तं स्वतः कारणान्तरनिरपेक्षं रञ्जयन्त्यनुरक्तं कुर्वन्तीति स्वरा इत्येवं स्वत आत्मनैव रञ्जयतीति स्वर इत्यर्थः। तथा च निःशङ्कः—

'. . . . . . . . श्रवणाच्छ्रुतयो मताः' (सं॰ १-३-८)

'श्रुत्यनन्तरभावी यः शब्दोऽनुरणनात्मकः।
स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥' (सं. १.३.२४,२५)

इति। श्रुतय इति कर्मणि 'स्त्रियां क्तिन्' (३-३-९४) इति क्तिन्। स्वर इति स्वतःशब्दोपपदाद्रञ्जेः 'अन्येष्वपि दृश्यते' (३-२-१०१) इति टिलोपे तःशब्दस्य पृषोदरादित्वाल्लोपः ॥ १४ ॥

एवं सप्तानां सामान्येन स्वर इति सार्थकं नामोक्त्वा पार्थक्येन सप्तानामपि नामान्याह—

षड्जर्षभगान्धारा मध्यमपञ्चमकधैवतनिषादाः ।
इत्यभिधास्ते ऽमीषां सरिगमपधनीति संज्ञान्या ॥ १५ ॥

षड्जर्षभेति । ते सप्त स्वरा इत्यभिधाः, इत्यभिधा नाम येषां त इति । कथम्? षड्जेत्यादि । प्रथमः षड्जो द्वितीय ऋषभ इत्यादि । षड्जर्षभगान्धारा इति पृथग्द्वंद्वः । पञ्चम एव पञ्चमकः । शिष्टं स्पष्टम् । ग्रन्थान्तरे व्याख्यानविशेषैरन्वर्थानि षड्जादिनामान्यभिधाय लाघवेनाग्रे व्यवहाराय सप्तानां नामान्तराण्याह—अमीषामिति । अमीषां षड्जादीनां सरिगमपधनीत्यन्या संज्ञा नाम । जातावेकवचनम् । नामानीत्यर्थः । तत्र षड्ज एव सः, ऋषभ एव रिरित्यादि । सरिगमपधनीति पृथक्पदम्; 'सर्वो द्वंद्वो विभाषैकवद्भवति' (प० सू० ३४) इत्येव ॥ १९ ॥

'श्रुतिभ्यः सप्त स्वराः स्युः' इत्युक्तेः श्रुतिर्द्वाविंशतेरपि सामान्येन स्वरसप्तकाभिव्यञ्जकत्वे प्राप्ते, श्रुतीनां स्वराभिव्यञ्जकत्वं व्यवस्थापयति—

तेषां श्रुतयः क्रमतो वेदा रामा दृशौ तथाम्बुधयः ।
निगमा दहनाः पक्षावेवं द्वाविंशतिः सर्वाः ॥ १६ ॥

तेषां श्रुतय इति । तेषां सरिगादीनां श्रुतयः, क्रमतः षड्जादिक्रमेण । वेदा रामा दृशावित्यादि । अत्र चतुःसंख्याकनिगमरूपार्थवाचिना वेदशब्देनेहानुपयोगात्तदर्थगतं चतुरिति संख्यामात्रं लक्ष्यते, न त्वर्थो ऽप्यभिधीयते । एवं रामा इत्यादिषु । तेन सस्य श्रुतयो वेदा इति चतस्रः, रे रामा इति तिस्रः, गस्य दृशाविति द्वे, मस्याम्बुधय इति चतस्रः । एवं पस्य निगमा इति चतस्रः, धस्य दहना इति तिस्रः, नेः पक्षाविति, द्वे इत्यर्थः । इदानीं कोहलमतङ्गादिदर्शितेषु नवधा श्रुतिविकल्पेषु तथा तथा दोषदर्शनात्समीचीनं द्वाविंशतिपक्षमेव निःशङ्कमतानुसारेण समर्थयन्ननुवदति—एवं द्वाविंशतिः सर्वा इति । सर्वाः सर्वप्रकारा

मन्द्रादिभेदभिन्ना वेणुवीणादिस्था अपि श्रुतयो द्वाविंशतिरेव, न न्यूना नाप्यधिका इत्यर्थः । 'सर्वं वाक्यं सावधारणम्' इति न्यायादेवकारः । कोहलमतं तु—

'द्वाविंशतिं केचिदुदाहरन्ति श्रुतीः श्रुतिज्ञानविचारदक्षाः ।
षट्षष्ठिभिन्नाः खलु केचिदासामानन्त्यमेव प्रतिपादयन्ति ॥'

इति । मतङ्गमतं तु 'सा चैकापि द्विधा ज्ञेया' इत्यादि 'सम्यक्तु श्रुतयो नव' इत्यन्तम् ॥ १६ ॥

एवं नियमितश्रुतिसंख्यानामपि स्वराणां स्वस्वान्तिमश्रुतिषु स्फुटतां कथयति—

तुर्यायां सप्तम्यां तासु नवम्यां श्रुतौ त्रयोदश्याम् ।
सप्तदशीविंशीद्वाविंशीषु च ते स्फुटाः क्रमतः ॥ १७ ॥

तुर्यायामिति । ते सरिगमपधनयस्तासु द्वाविंशतौ श्रुतिषु मध्ये क्रमतः षड्जादिक्रमेण स्फुटाः प्रकटाः । भवन्तीति शेषः । क्व? तुर्यायां श्रुतावित्यादि । तत्र चतुःश्रुतिरपि सश्चतुर्थ्यां श्रुतौ स्पष्टो भवति । त्रिश्रुतिरपि रिः सप्तम्याम्, स्वस्य तृतीयायामित्यर्थः । द्विश्रुतिर्गो नवम्यां स्वस्य द्वितीयायाम् । चतुःश्रुतिर्मस्त्रयोदश्यां स्वस्य चतुर्थ्याम् । चतुःश्रुतिश्च पः सप्तदश्यां स्वस्य चतुर्थ्याम् । त्रिश्रुतिर्धो विंश्यां स्वस्य तु तृतीयायाम् । द्विश्रुतिर्निर्द्वाविंश्यां स्वस्य तु द्वितीयायाम् । सप्तदशीविंशीद्वाविंशीष्विति द्वंद्वः । अत्र श्रुतिभ्यः स्वराः स्युरित्युक्तम् । तत्र पञ्च पक्षाः संभवन्ति । जातिव्यक्त्योरिव स्वरश्रुत्योस्तादात्म्यमिति प्रथमः । दर्पणे मुखविवर्तवच्छ्रुतिषु स्वरो विवर्तत इति द्वितीयः । घटस्य मृत्पिण्डदण्डकार्यत्ववत्स्वरस्य श्रुतिकार्यत्वमिति तृतीयः । क्षीरं दधिरूपेणेव श्रुतयः स्वररूपेण परिणमन्त इति चतुर्थः । दीपे सत्यन्धकारस्थितघटाद्यभिव्यक्तिवच्छ्रुतिषु स्वराणामभिव्यक्तिरिति पञ्चमः । तेषु पूर्वे त्रयस्तथा तथा दूषिता इति चरमौ द्वावदुष्टावङ्गीकृतौ । तयोरपि द्वितीयो ऽत्राङ्गीकृतश्चतुर्थ्यां स्फुट इति । इति विस्तरभिया संक्षिप्योक्तम् । विंशीद्वाविंशीति 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' (५-२-५६) इति तमडभावपक्षे 'तिविंशतेर्डिति' (६-४-१४२) इति तिलोपः । डटष्ठित्वान्ङीप् । विपुलार्याच्छन्दः ॥ १७ ॥

अत्र शरीरे प्रतिस्थानं द्वाविंशतिनाडीसंनिवेशस्य तत्रत्यश्रुत्युत्पत्तेश्च परोक्षत्वात्तत्सद्भावे संदेहः स्यादिति तन्निरासार्थं प्रत्यक्षतः संवादाय वीणायां श्रुतिस्वरज्ञानोपायं ग्रन्थकृन्निजधियैवाह—

पृथुवक्ष्यमाणवीणा मेरौ स्थाप्याश्चतस्र इति तन्त्र्यः ।
मन्द्रतमध्वनिराद्या त्रयं क्रमोच्चस्वनं किंचित् ॥ १८ ॥
न्यस्याः सूक्ष्माः सार्यो ऽथ द्वाविंशतिरधश्चरमतन्त्र्यः ।
तन्त्री यथेयमुच्चोच्चतररवा किमपि तासु स्यात् ॥ १९ ॥
द्व्यन्तर्नेष्टो ऽन्यरवः श्रुतय इति रवा इहान्त्यतन्त्र्यां सः ।
ऋषभस्तृतीयसार्यां गः पञ्चम्यां नवम्यां मः ॥ २० ॥
पस्तु त्रयोदशीस्थः षोडश्यष्टादशीस्थितौ च धनी ।
द्वाविंशीस्थः षड्जो द्विगुणसमः पूर्वषड्जेन ॥ २१ ॥

पृथुवक्ष्यमाणेत्यार्याचतुष्टयेन । पृथुस्तिर्यग्विस्तीर्णः ; यो वक्ष्यमाणाया द्वितीयविवेके कथयिष्यमाणाया वीणाया रुद्रवीणाया मेरुर्मेढकः, वीणाया ऊर्ध्वभागे वज्रावष्टम्भितस्तन्त्र्याधारः सारीविशेष इति यावत् । तस्मिंश्चतस्रस्तन्त्र्यो लोहतन्तव इत्येवं प्रकारेण स्थाप्याः । तमेवाह—आद्येति । आद्या वादकवामा सती प्रथमातन्त्री मन्द्रतमध्वनिरतिशिथिलीकरणेनातिनीचस्वना कार्येति शेषः । तथा त्रयं द्वितीयतृतीयतुर्यतन्त्रीत्रयं किंचिदुच्चस्वनम् । ततः किंचिदुच्चस्वना द्वितीया ; ततोऽपि तृतीया ; तथा तस्या अपि तुरीया तद्वदित्यर्थः । अथ तदनन्तरं चरमतन्त्र्या अधः ; वीणादण्डपृष्ठ इत्यर्थः । सूक्ष्मा द्वाविंशतिः सार्यः काष्ठादिमय्य ऊर्ध्वपट्टिका न्यस्याः स्थाप्याः । स्थापनप्रकारमाह—यथेति । यथा येन प्रकारेणेयं तुरीया तन्त्री तासु द्वाविंशतौ सारीषु किमपि मनागुच्च उच्चतरश्च रवो यस्याः सा स्याद्भवेत्, तथा स्थाप्या इत्यर्थः । अत्र मेरुस्थतुर्यतन्त्रीध्वनेः प्रथमा सारी किंचिदुच्चध्वनिः ; द्वितीया तु सारी मेरुस्थतन्त्रीध्वनेरेवकिंचिदुच्चतरध्वनिः । एवं द्वितीयसार्यपेक्षया तृतीयतुर्यसार्योरुच्चतरत्वे, एवमेव तृतीयसार्याद्यपेक्षया चतुर्थपञ्चम्यादिषु द्वयोर्द्वयोरुच्चोच्चतरत्वे वेदितव्ये । तास्विति 'कटे

आस्ते' इति वदौपश्लेषिकमधिकरणम् ॥ उच्चोच्चतरत्वयोरपि प्रकारमाह—द्व्यन्तरिति। द्व्यन्तर्द्वयोर्द्वयोर्मध्ये ऽन्यरवो नेष्टः, नादान्तरं न कार्यम्। यथा तन्त्रीध्वन्योः सारीध्वन्योश्च मध्ये पूर्वध्वनेः किंचिदुच्चं परध्वनेस्तु किंचिन्नीचं नादान्तरं नोत्पद्येत तथा ध्वन्योरुच्चोच्चतरत्वं कार्यमित्यर्थः। द्व्यन्तरित्यत्र सामर्थ्याद्वीप्सा। प्रकृतमाह—श्रुतय इति। इति रवाः, तन्त्रीमेरुसारीसंश्लेषोद्भवा ये ध्वनयस्ते श्रुतयः श्रुतिशब्दवाच्याः। इति श्रुतीः प्रतिपाद्य तत्र यथायथं षड्जाद्यभिव्यक्तिं कथयति—इहान्त्येति। इह सारीषु ध्वनिषु मध्ये अन्त्यतन्त्र्यां मेरुश्लिष्टतुर्यतन्त्रीरवे सः षड्जः। अभिव्यज्यत इति शेषः। अत्र तन्त्रीशब्देन तदुद्भवो रवो लक्ष्यते। ऋषभस्तृतीयसार्यां तृतीयसारीरवे व्यज्यते। सारीणां तृतीयपञ्चमनवमत्वादिकं सार्यपेक्षया, न तु मेर्वपेक्षयेति ज्ञेयम्। इहापि लक्षणा। गः पञ्चम्याम्, नवम्यां मः। सार्यामिति शेषः सर्वत्र॥ पस्तु पञ्चमस्तु त्रयोदशीस्थः, त्रयोदश्यां तिष्ठति स्फुटत्वेनेति तत्स्थः। षोडश्यष्टादशीस्थितौ च धनी, षोडशीस्थितो धः, अष्टादशीस्थितो निः। तु च शब्दौ समुच्चये। द्वाविंशीस्थः षड्जः। षड्जो ऽत्र मध्यस्थानस्थ इति ज्ञेयम्। कीदृक्? पूर्वषड्जेन मेरुतन्त्रीस्थमन्द्रषड्जेन द्विगुणसमः, द्विगुणश्चासौ समश्च। द्विगुणप्रयत्नसाध्यः सन्नपि समध्वनिरित्यर्थः। यथा देवदत्तो नीचस्थलादुच्चस्थानगतो ऽपि स एवेति प्रत्यभिज्ञायते तथेत्यभिप्रायः॥ १८—२१॥

ननु देहस्थश्रुतिस्वरसंवादाय वीणायां द्वाविंशतिसंख्याकैः श्रुतिपदैः स्वराभिव्यञ्जनं वक्तुं युक्तं न तु षड्विंशतिसंख्याकैरित्याशङ्क्याह—

ध्वनिशुद्धिनिश्चयार्थं विकृतन्यर्थं च सश्चतुःश्रुतिकः।
पुनरुक्त इति मतं मे श्रुतिस्वरावगमनाय लघु॥ २२॥

ध्वनिशुद्धीति। चतुःश्रुतिकः सः षड्जः पुनरुक्तः। किमर्थम्? ध्वनीनां तन्त्रीमेरुसारीसंश्लेषजन्यानां श्रुतिसंज्ञार्हाणां या शुद्धिस्तन्निश्चयार्थं स्थापनं शुद्धं जातमिति प्रत्ययाय। यया पूर्वोक्तस्थापनया मध्यषड्जेन सह मन्द्रषड्जस्य मेरुस्थस्य संवादः सा शुद्धेति निश्चयः स पुनश्चतुःश्रुतिकषड्जं विना न संभवेदित्याशयः। किं च विकृतन्यर्थं च, विकृतः शुद्धादन्यो वक्ष्यमाणो यो

निषादस्तदर्थं च। पुनः षड्जस्य श्रुतिकथनं विना निषादस्य षड्जाद्यश्रुत्यवलम्बनेन कैशिकत्वं तच्छ्रुतिद्वयावलम्बनेन काकलित्वं च वक्ष्यमाणं संवादाय नोपपद्येतेति भावः। उक्तं श्रुतिस्वरप्रत्यायनं निगमयति—इति मतं म इति। श्रुतिस्वराणां यदवगमनं संवादाय प्रत्यायनं तदर्थं मे इति मतम्। मया इति मन्यत इत्यर्थः। कथं मतम्? लघु विस्तरभयात्संक्षिप्तं यथा तथा। अत्र विस्तरकातरेण मया वीणाद्वयप्रदर्शनपूर्वं सारणाभिः स्वरेषु स्वरान्तरप्रवेशो न कथितः, किं तूपायमात्रं स्वधिया कथितमित्यर्थः। मतमिति 'मतिबुद्धि–' (३-२-१८८) इत्यादिना वर्तमाने क्तः। तद्योगे 'क्तस्य च वर्तमाने' (२-३-६७) इति कर्तरि षष्ठी ॥ २२ ॥

इदानीं पूर्वोक्तश्रुतिव्यवस्थापकस्वरसप्तकमनूद्य तत्र शुद्धतां विधत्ते—

इति सप्तोक्ताः शुद्धा विकृतान्सप्तैव वच्मि सह नाम्ना।
साधारणोऽन्तरश्च श्रुतिं श्रुती चैत्य गो मस्य ॥ २३ ॥
निः कैशिकी च काकल्यथ सस्यैकां भजंश्च तां ते द्वे।
निगमा मृदुपरसमपाः समपतृतीयश्रुतिस्थित्या ॥ २४ ॥

इति सप्तोक्ताः शुद्धा इति। अत्र यत्तदोरध्याहार आर्थः। इति पूर्वोक्तप्रकारेणोक्ता ये सप्त ते शुद्धाः। ज्ञेया इति शेषः। एवं शुद्धाः सप्त सह नामभिः प्रोक्ताः। अथ विकृतानपि सप्तसंख्याकानेव सनाम लक्षयितुं प्रतिजानीते—विकृतानिति। सप्तैव विकृतान्नाम्ना सह वच्मि वक्ष्यामि। नाम्नेति जातावेकवचनम्। नाम्ना नामभिरित्यर्थः। तत्र तावद्गान्धारनिषादयोर्द्विधा विकृतत्वं लक्षयन्द्वे द्वे नामनी आहोत्तरार्धपूर्वार्धाभ्याम्—साधारण इति। गो मस्य श्रुतिं श्रुती चैत्य प्राप्य साधारणोऽन्तरश्च क्रमेण स्यादिति च शेषः। गान्धारो मध्यमस्य प्रथमायां श्रुतौ, आदितस्तु दशम्यां तिष्ठन्साधारणनामा भवति। तथा गान्धार एव मध्यमस्य मस्य द्वितीयायां श्रुतौ, आदितस्त्वेकादश्यां तिष्ठन्नन्तरनामा। अथ निः सस्यैकां तां श्रुतिं द्वे ते श्रुती भजन्गृह्णन्सन्कैशिकी काकली च क्रमेण स्यादिति च शेषः। निषादः षड्जस्य प्रथमायां श्रुतौ तिष्ठन्कैशिकिनामा। तथा निषाद एव षड्जस्य द्वितीयायां श्रुतौ तिष्ठन्काकली-

नामेत्यर्थः । कैशिकीतीव्रन्तः । काकलीवन्तः ; द्धन्तो वा । इदानीं निगयोस्तृतीयं मस्य तु प्रथमं विकृतत्वं लक्षयन्नेकैकं नाम चाह—निगमा इति । निगमा निषादगान्धारमध्यमाः समपतृतीयश्रुतिस्थित्या समपानां षड्जमध्यमपञ्चमानां यास्तृतीयश्रुतयस्तासु या स्थितिः स्फुटता तया मृदुपरा मृदुशब्दात्परा ये समपाः, ते स्युरिति शेषः । निषादः स्वद्वितीयश्रुतिं त्यक्त्वा यदा षड्जस्य तृतीयायाम्, आदितस्त्वेकविंशत्यां श्रुतौ तिष्ठति तदा मृदुसनामा । एवं गान्धारः स्वद्वितीयश्रुतिं त्यक्त्वा यदा मध्यमस्य तृतीयायाम्, आदितस्तु द्वादश्यां तिष्ठति तदा मृदुमनामा । तथा मध्यमः स्वचतुर्थश्रुतिं त्यक्त्वा यदा पञ्चमस्य तृतीयायाम्, आदितस्तु षोडश्यां तिष्ठति तदा मृदुमनामा । यद्यपि स्वस्वचतुर्थश्रुतित्यागेन स्वस्वतृतीयश्रुतिस्थानां षड्जमध्यमपञ्चमानामेव प्राचीनैर्विकृतत्वमुक्तम्, तथापि देशीलक्ष्ये षड्जपञ्चमयोः स्वस्वचतुर्थश्रुतित्यागादर्शनात्स्वस्वतृतीयस्थानामपि षड्जमध्यमपञ्चमानां लक्ष्ये निषादत्वगान्धारत्वमध्यमत्वैरेव व्यवहारदर्शनाच्च निगमानामेव विकृतत्वमिहोक्तम् । एवमादिप्राचीनविरोधं तु ग्रन्थकृदेवाग्रे ससंमति परिहरिष्यति ॥ २३, २४ ॥

ननु प्राचीनैर्द्वादश विकृता उक्ताः, इह तु सप्तैवेति विरोध इत्याशङ्क्य प्राच्यमतसंख्यानुवादपूर्वं सप्तैवेति मतं युक्त्या द्रढयति—

द्वादश विकृतान्पूर्वे वदन्ति तत्र तु पृथक्पृथग्ध्वनितः ।
सप्तैव स्युर्भिन्ना न पञ्च यदि मे समध्वनयः ॥ २५ ॥
न पृथक्शुद्धसमाभ्यामच्युतसमकौ चतुःश्रुती च रिधौ ।
शुद्धरिधाभ्यां विकृतत्रिश्रुतिपादपि चतुश्रुतिपः ॥ २६ ॥
भिन्नो न चतुःश्रुतिधो निःशङ्कमतेऽपि कूटपुनरुक्तौ ।
तल्लक्षणतो भेदो ऽप्यमीषु पञ्चसु न लक्ष्ये भित् ॥ २७ ॥
नैकश्रुतयो ऽप्येते श्रवणार्हाः स्वचरमश्रुतावेव ।
न त्वाद्यासु श्रुतिषु स्पष्टमिति विचित्रवीणातः ॥ २८ ॥

द्वादशेत्याद्यार्याचतुष्टयेन । प्राचीनास्तु विकृतान्द्वादश वदन्ति । तद्यथा—षड्जः स्वादिमान्तिमश्रुत्योः क्रमेण निषादर्षभाभ्यां गृहीतयोः स्वोपान्त्यश्रुति-

स्थित्या च्युत इत्येको विकृतः। तथा स एव स्वप्रथमद्वितीयश्रुत्योर्निषादेन गृहीतयोः स्वान्तिमश्रुतिस्थित्या अच्युत इति द्वितीयः। तथा ऋषभः षड्जस्यान्त्यां श्रुतिं गृहीत्वा चतुःश्रुतिः सन्विकृत इति तृतीयः। तथा गान्धारो मध्यमस्याद्यां श्रुतिं गृहीत्वा त्रिश्रुतिः सन्विकृत इति चतुर्थः। तथा स एव मध्यमस्य प्रथमद्वितीये श्रुती गृहीत्वा चतुःश्रुतिः सन्विकृत इति पञ्चमः। तथा मध्यमः स्वादिमान्त्यश्रुत्योर्गान्धारपञ्चमाभ्यां गृहीतयोः स्वोपान्त्यश्रुतिस्थित्या च्युत इति विकृतः षष्ठः। तथा स एव प्रथमद्वितीयश्रुत्योर्गान्धारेण गृहीतयोः स्वान्तिमश्रुतिस्थित्या अच्युत इति विकृतः सप्तमः। तथा पञ्चमो मध्यमग्रामे स्वान्तिमश्रुतौ धैवतेन गृहीतायां स्वोपान्त्यश्रुतिस्थित्या त्रिश्रुतिः सन्विकृत इत्यष्टमः। तथा स एव मध्यमग्रामे मध्यमस्यान्त्यां श्रुतिं गृहीत्वा चतुःश्रुतिः सन्नपि स्वोपान्त्यश्रुतिस्थित्या विकृत इति नवमः। तथा धैवतो मध्यमग्रामे पञ्चमस्यान्त्यां श्रुतिं गृहीत्वा चतुःश्रुतिः सन्विकृत इति दशमः। तथा निषादः षड्जस्याद्यां श्रुतिं गृहीत्वा चतुःश्रुतिः सन्विकृत इत्येकादशः। तथा स एव षड्जस्य प्रथमद्वितीये श्रुती गृहीत्वा चतुःश्रुतिः सन्विकृत इति द्वादशः। तथा च निःशङ्कः—'च्युतोऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत्' इत्यारभ्य; 'प्राप्नोति विकृतौ भेदौ द्वाविति द्वादश स्मृताः' (१-३-४०-४९) इत्यन्तेन। एवं पूर्वं प्राचीना यान्द्वादश वदन्ति। तत्रेत्युक्तेर्यानिति लभ्यते। तत्र तु तेषु द्वादशसु मध्ये सप्तैव भिन्नाः स्युः। सप्तैव विकृतान्विलक्षणत्वेन संभावयामीत्यर्थः। ते यथा—प्राचीनमते च्युतः षड्ज एकः, त्रिश्रुतिर्गान्धारो द्वितीयः, चतुःश्रुतिर्गान्धारस्तृतीयः, च्युतो मध्यमश्चतुर्थः, त्रिश्रुतिः पञ्चमः पञ्चमः, त्रिश्रुतिर्निषादः षष्ठः, चतुःश्रुतिश्च निषादः सप्तमश्चेति। अस्मिन्मते त्वेत एव मृदुससाधारणान्तरमृदुममृदुपकैशिकिकाकलीनामानो भवन्ति। एवं सप्तानामेव भिन्नत्वे हेतुमाह—**पृथक्पृथगिति**। पृथक्पृथग्ध्वनितः; शुद्धषड्जादिभ्यो भिन्नभिन्नतया ध्वनेः प्रतीयमानत्वादित्यर्थः। द्वादशस्ववशिष्टपञ्चके कण्ठोक्त्या भिन्नत्वं वारयति—**न पञ्चेति**। परं तु पञ्च भिन्ना नेत्यर्थः। ते यथा—तन्मतेऽच्युतषड्जः, चतुःश्रुतिर्ऋषभः, अच्युतो मध्यमः, मध्यमग्रामे मध्य-

मान्त्यश्रुतिगृहीतचतुःश्रुतिः पञ्चमः, तत्रैव चतुःश्रुतिर्धैवतश्चेति । एषामभिन्नत्वे हेतुमाह—यदिम इति । यद्धेतोरिमेऽनन्तरोक्ताः समः शुद्धषड्जादिभिस्तुल्यो ध्वनिर्येषां ते ॥ अभिन्नत्वमेव स्पष्टयति—न पृथगिति । शुद्धौ यौ समौ षड्जमध्यमौ ताभ्याम् अच्युतौ च तौ समकौ षड्जमध्यमौ च तौ न पृथक् । तन्मते तु योऽयमच्युतः षड्जो विकृतः स शुद्धषड्जेन सह स्वान्त्यश्रुतिस्थतया तुल्यध्वनिरेव श्रूयत इत्यर्थः । तथाच्युतमध्यमो विकृतः स्वान्त्यश्रुतिस्थतया शुद्धमध्यमेन तुल्यध्वनिरेव श्रूयत इत्यर्थः । च परं चतुःश्रुती रिधौ शुद्धरिधाभ्यां न पृथक् । चतुःश्रुती ऋषभस्त्रिश्रुते ऋषभात्, तथा चतुःश्रुतिर्धैवतस्त्रिश्रुतेर्धैवताच्च स्वास्त्यश्रुतिस्थत्वादेव न भिन्नध्वनिरित्यर्थः । अपीत्यपरं विकृतश्चतुःश्रुतिर्यः पः पञ्चमः स विकृतादेव त्रिश्रुतिपात्त्रिश्रुतिपञ्चमान्न पृथक् । मध्यमग्रामे तु चतुःश्रुतेः शुद्धपञ्चमापेक्षया विकृतस्यापि पञ्चमस्य त्रिश्रुतेर्विकृतादेव पञ्चमान्न भेदः, स्वोपान्त्यश्रुतिस्थत्वादुभयोरपीत्यर्थः । यथा तथाधारभूतश्रुतेरपराः पूर्वश्रुतयो न्यूनाधिकभावेन भेदेऽकिंचित्करा इति भावः ॥ अस्मिन्नेव भावार्थे शार्ङ्गदेवस्यापि क्वचित्संमतिमाह—भिन्नौ नेति । निःशङ्कमते शार्ङ्गदेवमतेऽपि कूटानां कूटतानानां या पुनरुक्तिस्तत्प्रतिपादको ग्रन्थस्तत्र चतुःश्रुतिर्यो धो मध्यग्रामस्थधैवतः स भिन्नो न त्रिश्रुतेः षड्जग्रामस्थधैवताद्विलक्षणो नेति तस्यापि संमतमित्यर्थः । तद्यथा—षड्जग्रामे पञ्चमः स्वान्तिमश्रुतौ तिष्ठति, मध्यमग्रामे तु स्वोपान्तिमश्रुतौ । तदा मध्यमग्रामे धैवतश्चतुःश्रुतिर्भवति षड्जग्रामे तु त्रिश्रुतिरेव । एवं सति तेनोक्तं मध्यमग्रामे पौरवीनाम्न्यां धैवताद्यायां षष्ठ्यां मूर्च्छनायां शुद्धसान्तरादिभेदभिन्नचतुर्विधे धनिसरिगमेति षट्स्वरात्मके क्रमे साशीतिरष्टाविंशतिशती (२८८०) कूटतानानि । तथा षड्जग्राम उत्तरायताख्यायां धैवताद्यायामेव तृतीयमूर्छनायां पूर्ववच्चतुर्विधे धनिसरिगमेति षाडवक्रमे पूर्वोक्तान्येव (२८८०) कूटतानानि भवन्ति । तानि ग्रामद्वयभेदकं पञ्चमं विना सदृशाकाराणीति पुनरुक्तानि । एवं पञ्चस्वरादिक्रमेष्वन्यान्यपि भिन्नभिन्नसंख्यानि । ४८० । ४८ । १२ । ४ । १ ॥ मिलितानि तु पञ्चविंशत्यधिकचतुस्त्रिंशच्छतसंख्यानि (३४२५) पुनरुक्तानीति तन्मतम् । अत्र यदि मध्यमग्रामे चतुःश्रुतिर्धैवतो भिन्नः षड्जग्रामे तु त्रिश्रुतिर्धैवतो भिन्न इति

मन्येत तदा विसदृशतया पौनरुक्त्यं न घटेतेति भावः। तथा च निःशङ्कः—

'. . . . . . . . भेदकं पञ्चमं विना।' इत्युपक्रम्य

* * * * * *

'धैवतादेस्तु पौरव्याश्चत्वारः षट्स्वराः क्रमाः।
तत्तानानां तु साशीतिः शताष्टाविंशतिर्मता॥
औडुवानां चतुर्णां प्रागुक्ता संख्या चतुःस्वरौ।
त्रिस्वरौ द्विस्वरावेकस्वरः प्रागुक्तसंख्यकाः॥
पञ्चविंशतिसंयुक्ता चतुस्त्रिंशच्छती त्वियम्।
तानानां सदृशाकारा स्यात्तानैरौत्तरायतैः॥' (१-४-९०-९७)

इति। तस्मादाद्यश्रुतेर्न्यूनत्वे वाधिक्ये वा स्वरान्तरत्वं नेति स्थितम्। अथ बहुसंमत्या भेदमभ्युपगच्छन्स्वोक्तौ लक्ष्यं प्रमाणयन्नाह—तल्लक्षणत इति। अमीषु पञ्चसु, अच्युतषड्जचतुःश्रुतिऋषभादिषु तल्लक्षणतः प्राचीनलक्षणाद्भेदे ऽपि। सतीत्यर्थात्। लक्ष्ये लोकप्रयोज्ये गाने भिद्भेदो न। यद्यपि शास्त्रे भेदः प्रतीयते तथापि प्रयोगे नेत्यर्थः। भिदिति संपदादित्वाद्भावे क्विप्॥ तदेव स्पष्टयति—नैकश्रुतयोऽपीति। द्वित्रिचतुःश्रुतयोऽप्येते गान्धारादिप्रकाराः स्वराः स्वा या चरमा अन्त्या श्रुतिस्तस्यामेव श्रवणार्हाः श्रोतृभिः श्रूयन्त इत्यर्थः। न त्वाद्यासु श्रुतिष्वन्त्यायाः पूर्वासु श्रवणार्हाः। द्विश्रुतिरपि गान्धारः स्वद्वितीयश्रुतावेव श्रूयते न प्रथमायामपीत्यर्थः। एवमृषभादयोऽपि। इत्यन्त्यश्रुतावेव स्वरावगमनं विचित्रा विविधा या वीणास्ताभ्य इति ततः स्पष्टम्। वैणिका ह्यनुमानेन तन्त्रीषु सारीषु वान्त्यश्रुतावेव स्वरं स्थापयन्ति तथैव श्रावयन्ति च, न तु तत्र पूर्वश्रुतीनामपि प्रकाशन उपयोगः। गायनकण्ठेऽपि तत्संवाद एवेति भावः। नैकेति निषेधनार्थनशब्दस्य सुप्सुपेति समासो नाकादिवत्॥२९—२८॥

अथ प्राचीनोक्तविकृतेभ्योऽन्यानपि विकृतान्संभावयन्नाह—

रिधयोः परश्रुतिगतेश्चतस्र इह पञ्च षट् तथा श्रुतयः।
देशीरागेष्वभिवीक्ष्यन्ते षट् तास्तथा गमयोः॥ २९॥
इति तेषु संभवन्ति त्रयोऽन्य एभ्यो विलक्षणा विकृताः।
पञ्चश्रुतिः शुचेर्गात्साधारणतश्च षट्श्रुतिकः॥ ३०॥

रिर्न पृथक् तादृग्धो नेः कैशिकिनश्च षट्श्रुतिर्गो मात् ।
किं तूक्तरिधगमानां व्यवहृतये पृथगिमाः संज्ञाः ॥ ३१ ॥

रिधयोः परेत्यार्यया सार्धया । इहैतेषु प्रसिद्धेषु देश्यां रुच्या जनहृदयरञ्जने गाने ये रागास्ते देशीरागास्तेषु रिधयो ऋषभधैवतयोश्चतस्रः पञ्च तथा षट् श्रुतयोऽभिवीक्ष्यन्ते । कथमित्याह—परेति परश्रुतिगतेः, परा याः श्रुतयः क्रमेण गमयोस्तथा निसयोश्च तासां गतिः प्राप्तिस्तस्या हेतोः । ऋषभो गान्धारस्यादिमां श्रुतिं गृहीत्वा चतुःश्रुतिः, तस्यैव श्रुतिद्वयं गृहीत्वा पञ्चश्रुतिः, मस्यादिमां श्रुतिं गृहीत्वा षट्श्रुतिः; एवं धैवतो निषादस्य प्रथमां द्वे च षड्जस्यादिमां श्रुतिं गृहीत्वा चतुरादिश्रुतिकः संपद्यत इत्यर्थः । तथेति चार्थे । गमयोर्गान्धारमध्यमयोस्ताः श्रुतयः षडभिवीक्ष्यन्त इत्येव परश्रुतिगतेरित्येव च । गान्धारो मध्यमस्य श्रुतिचतुष्टयं गृहीत्वा षट्श्रुतिः, तथा मध्यमोऽपि पञ्चमस्यादिमश्रुतिद्वयं गृहीत्वा षट्श्रुतिरित्यर्थः । तत्र श्रीरागादिषु रिधौ चतुःश्रुतिकौ, मल्लार्यादिषु पञ्चश्रुतिकौ, शुद्धनाट्यादिषु षट्श्रुतिकौ, सारङ्गादिषु गः षट्श्रुतिकः, शुद्धवराट्यादिषु मः षट्श्रुतिक इति ज्ञेयम् । इतीति । इति हेतोस्तेषु स्वरेभ्येभ्यो विकृतेभ्यो विलक्षणा विसदृशा अन्ये त्रयो विकृताः संभवन्ति । ननूक्तरीत्या अष्टापि विकृता वक्तुं युक्ता न तु त्रय एवेत्याशङ्क्याह—पञ्चश्रुतिरित्युत्तरार्धपूर्वार्धाभ्याम् । पञ्चश्रुती री ऋषभः शुचेः शुद्धाद्गान्धारात्, षट्श्रुतिकश्च रिः साधारणतः साधारणाख्यविकृतगान्धारात् । क्रमेणेत्यर्थात् । न पृथङ् न भिन्नः । स एव स इत्यर्थः । च परं तादृक्पञ्चश्रुतिः षट्श्रुतिश्च धो धैवतो नेः शुचेर्निषादात्, कैशिकिनस्तदाख्यविकृतनिषादाच्च । क्रमेणेत्येव । षट्श्रुतिर्गो गान्धारो माच्छुचेर्मध्यमात्, न पृथगित्येव । शुचेरिति निमाभ्यामपि संबध्यते । पञ्चश्रुतिको रिर्गान्धार एव, षट्श्रुतिकश्च रिः साधारण एव । तथा पञ्चश्रुतिर्धो निषाद एव, षट्श्रुतिश्च धः कैशिक्येव । तथा षट्श्रुतिर्गो मध्यम एव न स्वरान्तरम् । तस्मादष्टसु त्रय एव भिन्नत्वेनावशिष्यन्त इति भावः । ननु तर्हि पञ्चश्रुतिषट्श्रुतिकरिधयोस्तथा षट्श्रुतिगस्य किमर्थमिह सहोपन्यास इत्याशङ्क्य चतुरादिश्रुतिक्रमेण तेषामपि वक्ष्यमाणनामकरणार्थं प्रतिज्ञयाह—किं तूक्तेति । किं तु

तथापि प्रयोजनमस्तीत्यर्थः। तदेवाह—उक्ताश्चतुःश्रुत्यादिप्रकारा ये रिधगमास्तेषां व्यवहृतये लाघवेन शास्त्रव्यवहाराय पृथक्प्रत्येकमिमा वक्ष्यमाणाः संज्ञाः, सन्तीति शेषः ॥ २९—३१ ॥

ता एव श्रुतिवैशिष्ट्येनाह—

तीव्रश्चतुःश्रुतित्वे पञ्चश्रुतिकत्व एव तीव्रतरः।
षट्श्रुतिकत्वे तीव्रतम इति परं ता यथायोगम् ॥ ३२ ॥

तीव्रश्चतुःश्रुतित्व इति। एवेतिशब्दयोः संबन्धः प्रत्येकम्। चतुःश्रुतिकत्व एव तीव्र इति रिधादीनां संज्ञेत्यर्थात्। एवं पञ्चश्रुतिकत्वषट्श्रुतिकत्वयोरेव तीव्रतर इति तीव्रतम इति च संज्ञेयम्। एवं सति गमयोरपि संज्ञात्रये प्राप्त आह—परं ता इति। परं तु ताः संज्ञा यथायोगं यथार्हम्। गस्य मस्य च षट्श्रुतिकत्वे तीव्रतम इत्येकैव संज्ञा, न तु तीव्रतीव्रतरसंज्ञे। गस्य तु चतुःश्रुतिकत्वपञ्चश्रुतिकत्वयोरन्तरमृदुमसंज्ञयोः प्रवृत्तेः, मस्य तु चतुःश्रुतिकत्वस्याव्यभिचारात्पञ्चश्रुतिकस्य चासंभवादित्यर्थः ॥ ३२ ॥

ननु पूर्वोक्तं निगमानां समपतृतीयश्रुतिस्थत्वं रिधगमानां चतुरादिश्रुतिमत्त्वं च पुरातनानुक्तत्वाच्छास्त्रान्तरविरुद्धमित्यत आह—

तदिति च शास्त्रविरोधि न वाद्याध्याये हि शार्ङ्गदेवेन।
लक्ष्यस्थित्यै प्रोक्तं शास्त्रार्थस्यान्यथात्वमपि ॥ ३३ ॥

तदिति। तत्पूर्वोक्तं निगमानां समपतृतीयश्रुतिस्थत्वम् इति च रिधगमानां चतुरादिश्रुतिमत्त्वं च शास्त्रविरोधि न। कुतः? हि यतः शार्ङ्गदेवेन वाद्याध्याये शास्त्राणां स्वोक्तपरोक्तानां योऽर्थस्तस्यान्यथात्वमपि लक्ष्यस्थित्यै लक्ष्यस्थापनाय प्रोक्तम्। शास्त्राणां लक्ष्यानुग्रहाय प्रवृत्तत्वाद्यत्र तयोर्विरोधस्तत्र शास्त्रैर्नियमितस्याप्यर्थस्योपलक्षणत्वादिना प्रकारान्तरेणापि गतिः कर्तव्या न तु लक्ष्यमुपेक्ष्यमित्युक्तम्। तेन यथोक्तश्रुतिकानामपि स्वराणां श्रुत्यन्तराक्रमणं न दोषायेति शास्त्र एवोक्तमित्यर्थः। तथा च षष्ठाध्याये किंनरीप्रकरणे निःशङ्कः—

'यद्वा लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वते ।
तस्माल्लक्ष्यविरुद्धं यत्तच्छास्त्रं नेयमन्यथा ॥' (सं० ६-३३३)

इत्यादि ॥ ३३ ॥

इदानीं रिधमानां यथायथं चतुरादिश्रुतिमत्त्वे साक्षात्संमत्यन्तरमाह—

**षट्श्रुतिकं मं पञ्चश्रुतिकौ च चतुःश्रुती रिधावगदत् ।**
**रागविवेकाध्यायव्याख्याने कल्लिनाथोऽपि ॥ ३४ ॥**

षट्श्रुतिकं ममिति । कल्लिनाथ एतदाख्यः संगीतरत्नाकरव्याख्याता । सोऽपि रागविवेकाध्यायव्याख्याने तद्द्वितीयाध्यायस्य विवरणे मं षट्श्रुतिकं रिधौ पञ्चश्रुतिकौ चतुःश्रुती-चागदत् उपलक्षणत्वेनोक्तवान् । तथा च लक्ष्ये प्रतीतानां लक्षणविरोधानां परिहारस्य प्रसङ्गे कल्लिनाथः—'क्रियाङ्गरामक्रियायां मध्यमस्य पञ्चमश्रुतिद्वयाक्रमणं नट्टदेवक्रीप्रभृतिष्वृषभधैवतयोरन्तरकाकल्यादिमश्रुतिद्वयाक्रमणेन प्रत्येकं पञ्चश्रुतिता च शास्त्रानभिहिता । श्रीरागे गान्धारनिषादयोर्मध्यमषड्जादिमैकैकश्रुत्याश्रयणेन त्रिश्रुतित्वे शास्त्रविहितेऽपि षड्जमध्यमयोरशास्त्रविहितत्रिश्रुतित्वकरणेन कैशिकयोरर्धवैशसम्, तत्रैवर्षभधैवतयोर्गान्धारनिषादादिमश्रुत्याक्रमणेन प्रत्येकं चतुःश्रुतित्वं वा शास्त्रविहितमित्यादि * * लक्ष्यलक्षणयोर्बहुधा विरोधाः' इति ग्रन्थेन विरोधानुद्भाव्य परिहारमाह—'देशीत्वादेतेषामनियमो न दोषाय । देशीत्वं च तत्तद्देशमनुजमनोरञ्जनैकफलत्वेन कामचारप्रवर्तितत्वम्' (सं० २-९९) इत्यादिना ॥ ३४ ॥

इदानीं प्रसङ्गेनोक्तवक्ष्यमाणनानाविधलक्ष्यलक्षणदोषपरिहाराय मतङ्गनिःशङ्कादिसंमतस्य श्रीहनूमतः संमतिमाह—

**ग्रामश्रुतिस्वरादेरनियम उक्ता हनूमताद्येन ।**
**देशीरागे येषां श्रुतिस्वरेत्यादिपद्येन ॥ ३५ ॥**

ग्रामश्रुतीति । आद्येन सर्वमूलभूतेन हनूमता देशीरागे । जातित्वादेकवचनम् । देशीरागेषु ग्रामश्रुतिस्वरादेरनियम उक्तः । ग्रामौ षड्जग्राममध्यमग्रामौ, श्रुतयः षड्जादिषु नियताश्चतुरादयः, स्वराः शुद्धविकृतलक्षणाः, त आदयो

यस्येति तस्य। अर्थजातस्येति शेषः। आदिशब्देन षाडवौडुवसंपूर्णत्वानि ग्रहांशादि जातय आलापकरणादीन्यन्यान्यपि। तेषां यथेष्टतेत्यर्थः। केन कारणेन? येषां श्रुतिस्वरेत्यादि यत्पद्यं श्लोकस्तेनेत्यर्थः। तथा च स एव—

'येषां श्रुतिस्वरग्रामजात्यादिनियमो न हि।
नानादेशगतिच्छाया देशीरागास्तु ते स्मृताः॥' इति॥

एवं यथोक्तश्रुतिकल्पनया स्वराणां शुद्धत्वविकृतत्वे अभिधाय द्विविधानामपि तेषां स्थानभेदेन त्रैविध्यमाह—

**ते मन्द्रमध्यतारस्थानस्थित्या त्रिधा पुनस्तेषाम्।**
**वादी संवादी च विवाद्यनुवादीति भेदाः स्युः॥ ३६॥**

ते मन्द्रेति। ते द्विविधा अपि स्वरा मन्द्रमध्यताराणां नादानां यानि स्थानानि हृत्कण्ठमूर्धरूपाणि तेषु या स्थितिस्तया हेतुना त्रिधा त्रिविधाः। उच्चोच्चतरोच्चतमस्थानस्थितपुरुषवत्तेषां स्थानकृत एव भेदो न तु स्वरूपकृत इत्यर्थः। अथ तादृग्विधानामपि स्वराणां रागप्रयोगार्थं प्रकारान्तरेण चातुर्विध्यमाह—पुनस्तेषामिति। पुनः प्रकारान्तरेण वादी संवादी विवाद्यनुवादी चेति भेदाः स्युः॥ ३६॥

तानेव लक्षणत आर्याद्वयेनाह। तत्रापि वादिनं लक्षयति—

**वादी स यः प्रयोगे बहुलो राजा ययोस्तु मध्ये स्युः।**
**द्वादश वाष्टौ श्रुतयोऽमात्यौ संवादिनौ तौ स्तः॥ ३७॥**

वादी स य इति। यः प्रयोगे रागादौ बहुलो ग्रहांशत्वादिना पुनः पुनरावर्तनान्मुख्यः स वदनाद्रागप्रतिपादकत्वाद्वादी। कीदृक्सः? राजा, नृपवन्मुख्य इत्यर्थः। 'सिंहो माणवकः' इतिवच्चेत्यर्थः, परत्र शब्दप्रयोगात्। एवमग्रेऽपि। संवादिनं लक्षयति—ययोस्त्विति। ययोस्तु मध्येऽन्तरे द्वादश वा, अथवा अष्टौ श्रुतयः स्युर्भवेयुस्तौ मिथः परस्परं संवदनाद्वादिना स्वरेण जनितरागरञ्जकत्वस्य निर्वाहकत्वात्संवादिनौ स्तः। कीदृशौ तौ? अमात्यौ, सचिवव-

द्राजारब्धकार्यनिर्वाहकाविल्यर्थः । मिथ इति पुरःस्थितमपीहापि ज्ञेयम् । द्वादशाष्ट-श्रुत्यन्तरत्वेऽपि समश्रुतिकयोरेव संवादित्वं ज्ञेयम् । तथा च मतङ्गः—'संवादिनस्तु पुनः समश्रुतिकत्वे सति त्रयोदशनवान्तरितत्वेनान्योन्यं बोद्धव्याः । तन्मते स्वराधारश्रुतेरपि गणनेति न विरोधः । तत्र संवादित्वं यथा—षड्जस्य मध्यमपञ्चमौ, ऋषभस्य धैवतः, गान्धारस्य निषादः, मध्यमस्य षड्जः, पञ्चमस्यापि षड्जः, धैवतस्य ऋषभः, निषादस्य गान्धारः । तेन यत्र रागे षड्जोंऽशस्तत्र मध्यमपञ्चमयोरप्यंशत्वेन कल्पितयो रागहानिर्न स्यादिति भावः । एवं सर्वेषु ॥ ३७ ॥

विवादिनं लक्षयति—

**एकश्रुत्यन्तरितौ विवादिनौ वैरिणौ मिथो भवतः ।**
**अनुवादिनस्तु शेषा भृत्या इत्थं यथार्थास्ते ॥ ३८ ॥**

**एकश्रुत्यन्तरिताविति** । यौ ताविति शेषः । एकया श्रुत्यान्तरितौ व्यवहितौ यौ तौ मिथो विवदनाद्वादिसंवाद्यनुवादिजनितरागरक्तिविनाशकत्वाद्विवादिनौ भवतः । कीदृशौ तौ ? वैरिणौ, शत्रुवदारब्धकृत्यविनाशकाविल्यर्थः । विवादित्वं यथा—ऋषभस्य गान्धारः, गान्धारस्य ऋषभः, धैवतस्य निषादः, निषादस्य धैवतः । तेन ऋषभस्थाने गान्धारः प्रयुज्यमानो रागहानिकर इति भावः । एवं परत्र । अनुवादिनं लक्षयति—**अनुवादिनस्त्विति** । शेषाः, येषां संवादित्वं विवादित्वं च नास्ति त इत्यर्थः । मिथः अनुवदनाद्वादिसंवादिसंपादितरक्त्यनुकूलत्वादनुवादिनः स्युरिति शेषः । कीदृशास्ते ? भृत्याः, सेवकवद्राजविचारारब्धकर्मानुगुणा इत्यर्थः । अनुवादित्वं यथा—षड्जस्य रिगधनयः, ऋषभस्य समपनयः, गान्धारस्य समपधाः, मध्यमस्य रिगपधनयः, पञ्चमस्य रिगमधनयः, धैवतस्य सगमपाः, निषादस्य सरिमपाः । तेन षड्जस्थाने रिगधनिष्वपि प्रयुज्यमानेषु किंचिद्रक्तिकरत्वमेवेति भावः । एवं सार्थकतया सूचितान्वाद्यादीन्स्पष्टोक्त्या सार्थकान्निगमयति—**इत्थमिति** । ते वादिसंवादिविवाद्यनुवादिन इत्थं नृपादिदृष्टान्तेन यथार्थाः सार्थका इत्यर्थः । अत्र शुद्धवाद्यादिपरिज्ञानाय वीणायां श्रुतिप्रस्तारो यथा—तिर्यग्रेखा द्वाविंशतिं लिखेत् । तासु वामतो वा दक्षिणतो वा

रेखाग्राणि द्वाविंशतिर्भवन्ति। तत्र षड्जादीन्स्वस्वश्रुतिसंख्यया विलिख्यान्तरश्रुतयो वेदितव्याः। एवं विकृतेष्वप्यूह्यम् ॥ ३८ ॥

एवं स्वरान्निरूप्य नियतस्वरसंनिवेशरूपान्मूर्च्छनादीन्निरूपयिष्यंस्तदाश्रयत्वाद्ग्रामयोः प्रसक्तयोर्ग्रामसामान्यलक्षणं प्रथममाह—

**स्वरनिकरो ग्रामः स्यादाधारो मूर्च्छनाक्रमादीनाम्।**
**षाड्जो माध्यम इति च द्वेधा स तयोः प्रधानत्वात् ॥ ३९ ॥**

स्वरनिकर इति। स्वराणां यो निकरः समूहः स ग्रामः स्यात्। यथा जनसमूहो ग्रामो लोके, एवमत्र स्वरसमूह इत्यर्थः। एतावत्येवोक्ते वेदवाक्येऽपि स्वरसमूहस्य सत्त्वात्तत्रातिव्याप्तिरिति तन्निवृत्तय आह—कीदृक्सः? आधार इति। मूर्च्छना च क्रमादयश्चेति तेषामाश्रय इत्यर्थः। आदिपदेन तानवर्णालंकारादयः। एवं सामान्येनोक्त्वा तद्द्वैविध्यमाह—षाड्ज इति। स ग्रामः षाड्जः षड्जस्य संबन्धी, षड्जग्राम इत्यर्थः। च परं माध्यमो मध्यमस्य संबन्धी, मध्यमग्राम इत्यर्थः। इति द्वेधा। द्वैविध्य एव हेतुमाह—तयोः षड्जमध्यमयोः प्रधानत्वात्। तत्र षड्जस्य सप्तस्वरमुख्यत्वं सर्वाद्यत्वात्संवाद्याधिक्याच्च, मध्यमस्य तु तथात्वं शुद्धतानेष्वविलोपित्वादिति तु ग्रन्थान्तरतो ज्ञेयम्। षाड्ज इत्यादि 'तस्येदम्' (४-३-१२०) इति संबन्धेऽण् ॥ ३९ ॥

द्विविधं तं क्रमाल्लक्षयति—

**स्वान्त्यश्रुतावुपान्त्यश्रुतौ च सति पञ्चमे क्रमात्स स्यात्।**
**किं तु विकारो देश्यां न पञ्चमे तदिह स प्रथमः ॥ ४० ॥**
**धत्ते रिमयोरन्त्यादिमे श्रुती गो निरप्यमू धसयोः।**
**धः पान्त्यां चेद्गान्धारग्रामः स्वर्गलोके ऽन्यः ॥ ४१ ॥**

स्वान्त्यश्रुताविति। पञ्चमे स्वस्य या अन्त्या चतुर्थी श्रुतिस्तस्यां सति च परमुपान्त्या तृतीया या श्रुतिः। स्वस्येति शेषः। तस्यां सति स षाड्जो माध्यम इति द्विविधोऽपि ग्रामः क्रमात्स्यात्। तत्र स्वरसमूहान्तर्गते पञ्चमे स्वचतुर्थ्यां श्रुतौ, आदितस्तु सप्तदश्यां तिष्ठति षड्जग्राम इत्यर्थः। तथा पञ्चम

एव स्वस्य तृतीयायां श्रुतौ, आदितः षोडश्यां तिष्ठति मध्यमग्राम इत्यर्थः । एवं ग्रामौ लक्षयित्वा तयोरपि षड्जग्रामप्रचारमेव देश्यां सहेतुकमाह—किं त्विति । किं तु परं तु तद्धेतोरिह देश्यां प्रथमः स ग्रामः षड्जग्रामः । वर्तत इति शेषः । तत्कुतः ? देश्यां पञ्चमे विकारः स्वचतुर्थश्रुतेश्च्यवनं न ग्रन्थान्तरोक्तम्, तत्तद्ग्रामरागेष्वन्येष्वपि रागेषु पञ्चमस्यैकरूपत्वादित्यर्थः । तथा च हनूमता देश्यामुक्तो ग्रामयोरनियमः 'येषां श्रुतिस्वर—' इत्यादिपद्येन । किं च रागविवेकाध्यायव्याख्याने कल्लिनाथोऽपि लक्ष्यलक्षणविरोधपरिहारप्रसङ्गादुक्तवान्—'त्रिचतुःश्रुतिकत्वेन ग्रामद्वयभेदकस्य पञ्चमस्यालोप्यत्वेन प्रयुज्यमानस्यापि सर्वरागेष्वेकरूपता' (सं० २-९८) इत्यादिना ॥ ४०—४१ ॥

एवं ग्रामं लक्षयित्वा तदाधेयेषु मूर्च्छनां तावत्सामान्यतो लक्षयति—

**स्वरसप्तकस्य सक्रममारोहश्चावरोहणं यदिह ।**
**सा मूर्च्छना भिदो ऽस्या उत्तरमन्द्रादिकाः सप्त ॥ ४२ ॥**

स्वरसप्तकस्येति । इह ग्रामे यत्स्वरसप्तकस्य सक्रममनुक्रमसहितमारोहोऽवरोहणं च सा मूर्च्छ्यते मोह्यते यया श्रोतेति मूर्च्छना । ज्ञेयेति शेषः । सक्रममित्युक्तेः कूटताने नातिव्याप्तिः । सप्तकेत्युक्तेः शुद्धतानव्यावृत्तिः । आरोहश्चावरोहणमित्युक्तिभ्यामारोह्यवरोहिद्विविधवर्णालंकारनिवृत्तिः । सक्रमं यदित्युभयत्र सक्रमं च यश्च यच्चेति 'नपुंसकमनपुंसकेन—' (१-२-६९) इति नपुंसकशेष एकवत्त्वं च । सेति प्रतिनिर्दिश्यमानमूर्च्छनाया लिङ्गम् । मूर्च्छनेति 'मुर्च्छा मोहसमुच्छ्राययोः' (भ्वा० २१३) अस्माण्ण्यन्तात् 'ण्यासश्रन्थो युच्' (३-३-१०७) इति युच् । अथ तस्या विशेषान्नामतः संख्यापूर्वं दर्शयति—भिदोऽस्या इति । अस्या मूर्च्छनाया भिदो भेदा उत्तरमन्द्रा आदिर्यासामिति ताः सप्त । भवन्तीति शेषः ॥ ४२ ॥

सप्तापि विशेषाल्ँलक्षयति—

**मध्यस्थसादिराद्याधः स्थन्याद्यादिकाः पराः षट् च ।**
**क्रम अरोहणमेषां षाडवमिह षट्स्वरं किमपि ॥ ४३ ॥**

पञ्चस्वरं तदौडुवमथ शुद्धा एव मूर्च्छना यर्हि ।
षाडविताश्चौडुविताः शुद्धास्ताना नवाम्बुधयः ॥ ४४ ॥

मध्यस्थसादिरिति । मध्यस्थो मध्यस्थानस्थो यः सः षड्जः स आदिर्यस्याः सा आद्या प्रथमा । भवतीति शेषः । च परम् अधःस्थास्तस्मात्षड्जान्नीचस्थाः । मन्द्रस्था इति यावत् । ये न्याद्या निषादादयस्त आदयो यासां ता इत्यधःस्थन्याद्यादिकाः परा अन्याः षड्जन्यादयः । तेन सरिगमपधनि निधपमगरिसेत्युत्तरमन्द्रा । निसरिगमपध धपमगरिसनीति **रजनी** । धनिसरिगमप पमगरिसनिधेत्युत्तरायता । पधनिसरिगम मगरिसनिधपेति **शुद्धषड्जा** । मपधनिसरिग गरिसनिधपमेति **मत्सरीकृत्** । गमपधनिसरि रिसनिधपमगेत्यश्वक्रान्ता । रिगमपधनिस सनिधपमगरीत्यभिरुद्गता ॥ अथ ग्रामस्याधेयान्तरं क्रमं लक्षयति—क्रम इति । एषां स्वराणामारोहणं क्रमः । न त्ववरोहणमित्यर्थाज्ज्ञेयम् । सरिगमपधनीत्येवं सः । अत्र स्वरसप्तकस्येति न नियमः । अत एव तस्मिन्प्रकृतेऽप्येषामिति पुनरुक्तम् । क्रमभेदाः शास्त्रान्तराज्ज्ञेयाः । इदानीमाधेयान्तराणि शुद्धतानाँल्लक्षयिष्यंस्तदुपयोगितया षाडवौडुवे तावल्लक्षयति—**षाडवमिहेति** । इह शास्त्रे यत्षट् स्वरा यस्मिंस्तत्किमपि मूर्च्छनादि तत्षाडवम् । यत्तदोरध्याहारः । तथा पञ्चस्वरं तदेवौडुवं चेति पूर्वाचार्यकृते संज्ञे । शुद्धतानाँल्लक्षयति—**अथ शुद्धा इति** । अथातः परं शुद्धाः स्वरविकाररहिता एव मूर्च्छना यर्हि यदि षाडविताः षट्स्वरात्मिकाः कृताः, च परम् औडुविताः पञ्चस्वरात्मिकाः कृताः, तर्हि सार्थं शुद्धास्तानाः । स्युरिति शेषः । शुद्धा एव मूर्च्छना इति वदता शास्त्रान्तरोक्तं शुद्धसान्तरसकाकलीकसान्तरकाकलीकतया मूर्च्छनानां चातुर्विध्यं सूचितम् । यद्यपि मूर्च्छना एव शुद्धास्तानाः स्युरित्युक्तौ तानेष्वारोहावरोहत्वं प्रतीयते, तथापि मतङ्गमतेनारोह एव तान इति ज्ञेयम् । तथा च मतङ्गः—'ननु कथं मूर्च्छनातानयोर्भेदः ? उच्यते, आरोहावरोहक्रमयुक्तः स्वरसमुदायो मूर्च्छनेत्युच्यते, तानस्त्वारोहणं भवतीति भेदः' इति । तान्संख्याति—नवाम्बुधयः (४९) एकोनपञ्चाशत् । तत्र क्रमात्षड्जग्रामे षड्जऋषभपञ्चमनिषादविहीना अष्टाविंशती रिगमपधनीत्यादयः षाडवाः शुद्धतानाः । तथा षड्जपञ्चमाभ्यां गान्धारनिषा-

दाभ्यां ऋषभपञ्चमाभ्यां च क्रमाद्विहीना एकविंशती रिगमधनीत्यादय औडुवाः। मिलितास्त्वेकोनपञ्चाशदिति प्राचीनमतम्। तथा च निःशङ्कः—

'षड्जगाः सप्त हीनाश्चेत्क्रमात्सरिपसप्तमैः ॥
तदाष्टाविंशतिस्ताना मध्यमे सरिगोज्झिताः।
सपाभ्यां द्विश्रुतिभ्यां च रिधाभ्यां सप्त वर्जिताः।
षड्जग्रामे पृथक्ताना एकविंशतिरौडुवाः' ॥ (सं. १-४-२७–३०)

इति। षाडविता औडुविता इति 'तत्करोति' इति ण्यन्तान्निष्ठा ॥४३––४४॥

एवं शुद्धतानान्निरूप्य तद्विलक्षणान्कूटतानानाह—

**पूर्णाश्चापूर्णाश्च व्युत्क्रमणोच्चारितस्वरा विविधाः।**
**चेन्मूर्च्छनास्तु कूटास्तानाः संख्याथ पूर्णानाम् ॥ ४५ ॥**
**खनिगमखशरा एकैकस्वरविमुचां क्रमाच्च नखगिरयः।**
**खार्का जिना रसा द्वौ भूरिति तत्तत्क्रमैर्युक्ता ॥ ४६ ॥**

पूर्णाश्चेति। पूर्णाः सप्त स्वराः, अपूर्णाश्चैकैकान्त्यस्वरत्यागे सति षट्स्वराद्येकस्वरान्ताश्च मूर्च्छनास्तु मूर्च्छना एव व्युत्क्रमणेनैकादिस्वरव्यत्यासेनोच्चारिताः स्वरा यासां तथाविधाश्चेत्तर्हि कूटास्तानाः। स्युरिति शेषः। द्वौ चौ परस्परविकल्पे। किं शुद्धा एव? नेत्याह—विविधा ग्रन्थान्तरोक्तचातुर्विध्याः। यद्वोत्तरमन्द्रादिनाम्न्यः। अथ सप्तस्वरादिसप्तविधानां कूटतानानां संख्यां प्रतिज्ञापूर्वं कथयति—**संख्याथेति**। अथ संख्या, कथ्यत इति शेषः। पूर्णादिक्रमेण तामेवाह—**निगमपूर्णानां खनिगमखशरा** (५०४०) इति। पञ्चसहस्राणि चत्वारिंशच्च। एकैकस्वरं विमुञ्चन्ति त्यजन्ति तेषामेकैकस्वरविमुचां च क्रमादियं संख्या भवतीति शेषः। तत्र षट्स्वराणां संख्या नखगिरयः (७२०) सप्त शतानि विंशतिश्च। पञ्चस्वराणां खार्काः (१२०) विंशत्यधिकं शतम्। चतुःस्वराणां जिनाः (२४) चतुर्विंशतिः। त्रिस्वराणां रसाः (६) षट्। द्विस्वराणां द्वौ (२) एकस्वराणां भूः (१) इत्येक इति। इयं च संख्या प्रतिमूर्च्छनं ज्ञेया। षड्जग्रामे मिलिता तु सर्वा शुद्धसप्तविध-

मूर्च्छनाकूटतानसंख्या (४१३९१)। नन्वियं पूर्णादिकूटतानानां संख्या किं व्यत्यस्तस्वरूपाणामेव तेषाम्? नेत्याह—तत्क्रमैर्युक्तेति। कीदृशी संख्या? ते ते ये क्रमाः सप्तस्वराद्येकस्वरान्ताः सप्त, तैर्युक्ता सहिता। क्रमाणामगणने तु प्रत्येकमेकैकोनेत्यर्थः। परं तु क्रमाणामकूटतानत्वेपीहोपादानं वक्ष्यमाणप्रस्तारादिसिद्धये। विमुचामिति क्विबन्तम्॥ ४९, ४६॥

एवं कूटतानानां बहुत्वात्प्रत्येकोच्चारणेन तत्स्वरूपप्रतिपादनं दुःसंपादमिति लाघवेन तज्ज्ञानोपायान्विवक्षुस्तेषु सप्तस्वराद्येकस्वरान्तसंख्यानां ज्ञानोपायं वैपरीत्येनाह—

एकादिकसप्तान्तेपूर्ध्वोर्ध्वाङ्केषु पूर्वपूर्वहते।
परपर एकादिकसंख्या स्यात्प्रस्तारमथ कथये॥ ४७॥
न्यस्य क्रमं यथेष्टं पूर्वः पूर्वः परादधः स्थाप्यः।
पूर्वो यद्युपरि स्यात्तत्तत्पूर्वः पुर उपरिगाः॥ ४८॥
मूलक्रमक्रमेण स्थाप्याः पृष्ठेऽस्य ये ततः शेषाः।
अथ नष्टस्पष्टनमिह लेख्या इत्थं क्रमस्थाङ्काः॥ ४९॥

एकादिकेति। एक आदिर्येषां ते च ते सप्तान्ते येषां ते च तेषु ऊर्ध्वोर्ध्वा उपर्युपरि स्थापिता येऽङ्कास्तेषु मध्ये परपरेऽग्रिमेऽग्रिमेऽङ्के पूर्वपूर्वहते आद्येनाद्येन गुणिते सत्येकादिका संख्या स्यात्। तद्यथा—(१) (२) (३) (४) (५) (६) (७) एवमूर्ध्वोर्ध्वस्थितेष्वेकादिषु एकेनाद्येन परे द्व्यङ्के गुणिते द्वावेव भवतः, 'एकेन गुणिते तदेव भवति' इति न्यायात्। तेनाद्येन द्व्यङ्केन परे त्र्यङ्के गुणिते षड् भवन्ति। एवमेव षडङ्केन चतुरङ्के गुणिते चतुर्विंशतिः स्यात्। तया च पञ्चाङ्के गुणिते विंशत्युत्तरं शतम्। तेन च षडङ्के गुणिते सप्त शतानि विंशत्युत्तराणि स्युः। तैश्चाद्यैः परे सप्ताङ्के गुणिते पञ्चसहस्राणि चत्वारिंशदुत्तराणि संपद्यन्ते। एषैवैकस्वरादिसंख्या पूर्वोक्ता। अथ प्रस्तारं वक्तुं प्रतिजानीते—प्रस्तारमथ कथय इति। प्रस्तारो नाम प्रथमद्वितीयतृतीयादिभेदानामा तत्तत्संख्यासमाप्तेः क्रमेण स्थापनम्॥ न्यस्य क्रममिति। यथेष्टमेकस्वरादिसप्तस्वरान्तेषु क्रमेषु मध्ये यं कंचित्क्रमं न्यस्य स, सरि,

सरिगेत्याद्यात्मकं प्रथमपङ्क्तिरूपेण लिखित्वा पूर्वः पूर्वः परादधः स्थाप्यः । अत्र परत्वपूर्वत्वे क्रमापेक्षया ज्ञेये । इह पूर्वः पूर्व इति वीप्सा आ प्रस्तारसमाप्तेः प्रतितानं सकृत्करणबुद्ध्या ज्ञेया, न त्वेककूटतानविषया । तेनैकवारमेव द्वितीयादिषु पङ्क्तिषु पूर्वः स्वरः परादधो लेख्यः । तत्र विशेषमाह—पूर्वो यदीति । पूर्वो यद्युपरि स्यात्तर्हि तत्पूर्वः स्थाप्य इति शेषः । लिखितुमारब्धः पूर्वश्चेदूर्ध्वपङ्क्तावग्रे दृश्यते, तर्हि तस्मात्पूर्वाद्यः पूर्वः स परादधो लेख्यः । पूर्वपूर्वोऽप्यग्रे चेत्तर्हि ततोऽपि पूर्व इत्येवं षड्जपर्यन्तं विचार्यम् । षड्जपर्यन्ता अपि पुरस्ताच्चेत्स्युस्तर्हि द्वितीयस्वरादधश्चिन्तनीयम् । तत्रापि षड्जपर्यन्ता अग्रे सन्ति चेत्तदग्रिमस्वराधो लेखनमित्यर्थः । एवं विचार्य पूर्वस्मिल्लिँखिते तत्परं कर्तव्यमाह—पुर उपरिगा इति । उपरिगा लिखितस्य च ऊर्ध्वस्तदपेक्षया येऽग्रे स्युस्ते पुरः पूर्वलिखितस्याग्रे स्थाप्या इत्यर्थः ॥ शेषाणां तु लेखनं पूर्वमिव तस्य पश्चाद्भाग इत्याह—मूलक्रमेति । ये ततः शेषाः स्थापितेभ्योऽवशिष्टाः, त इत्यर्थात् । अस्य पूर्वलिखितस्य पृष्ठे स्थाप्याः । कथम् ? मूलक्रमक्रमेण । मूलक्रमे षड्जादिके यः क्रमो व्यवहितत्वेनाव्यवहितत्वेन वा परिपाटी तया । एवं प्रस्तारः । तत्र निदर्शनाय चतुःस्वरप्रस्तारः प्रदर्श्यते । सरिगमेति पूर्वं क्रमः स्थाप्यः । तत्र षड्जस्याधः पूर्वस्वराभावात्स्वरो न स्थाप्यते । ऋषभस्य त्वधस्तत्पूर्वः षड्जः स्थाप्यते । उपरिगतौ गान्धारमध्यमौ पुरो लेख्यौ । अवशिष्टो ऋषभः षड्जस्य पश्चाद्देयः । एवं रिसगमेति क्रमेण सहितो द्वितीयो भेदः, तं विना तु प्रथम एव । तत्र ऋषभस्याधः पूर्वः षड्जो देयश्चेत्तर्हि स पुरो वर्तते, षड्जस्य पूर्वो नेति तौ हित्वा गान्धारस्याधो रिः पुरो मः पश्चात्सगौ मूलक्रमे व्यवहितक्रमेण । एवं सगरिमेति तृतीयो भेदः । ततो गान्धारस्याधः पूर्वो ऋषभो देयत्वेन प्राप्तः । परं तु पुरस्तात्स विद्यत इति तस्यापि पूर्वः षड्जो लिख्यते पुरो रिमौ पश्चाद्गः । एवं गसरिमेति चतुर्थो भेदः । ततो गान्धारस्य पूर्वस्तत्पूर्वश्चाग्रे वर्तत इति गं विहाय पूर्वासंभवात्सं च विहाय रेरधः पूर्वः सः पुरो मः पश्चाद्रिगौ मूलक्रमेऽव्यवहितक्रमेण । एवं रिगसमेति पञ्चमः । ततः पूर्वोक्तरीत्या गान्धारस्यैवाधो रिः पुरः समौ पश्चाद्गः । एवं गरिसमेति षष्ठः । इति मान्ताः षड्भेदाः । ततः पूर्वरीत्या मस्यैवाधस्ताद्गः । तदुपरिगतस्वराभावात्पश्चादेव सरिमाः । एवं सरिमगेति

सप्तमः । ततो रेरधः सः पुरो मगौ पश्चाद्रिः । एवं रिसमगेत्यष्टमः । ततो मस्यैवाधो रिः पुरो गः पश्चात्समौ । एवं समरिगेति नवमः । ततो मस्याधः पूर्वपूर्वपूर्वः षड्ज एव पुरो रिगौ पश्चान्मः । एवं मसरिगेति दशमः । ततः पूर्वरीत्या मसौ विहाय रेरेवाधः पूर्वः सः पुरो गः पश्चाद्रिमौ । एवं रिमसगेत्येकादशः । ततः पूर्वरीत्या रिं त्यक्त्वा मस्यैवाधः पूर्वपूर्वो रिः पुरः सगौ पश्चान्मः । एवं मरिसगेति द्वादशः । इति गान्ताः षड्भेदाः । ततः पूर्वरीत्या मरिसान्हित्वा गस्याधो रिः सगमा एव पश्चात् । एवं सगमरीति त्रयोदशः । इत्यादयो र्यन्ताः षड्भेदाः । ततः परे सान्ताः षड्भेदाः । मिलिताश्चतुर्विंशतिर्भेदा मगरिसेत्यन्ताः । ततः परं प्रस्तारो न संभवति, सर्वेषां हि पूर्वे पुरः सन्तीति । एवमेव पञ्चस्वरादिषु प्रस्तारः । तत्र सरिगमपेति पञ्चस्वरप्रस्तारे पान्ताश्चतुर्विंशतिर्भेदाः, ततो मान्ता अपि चतुर्विंशतिः, ततो गान्ता अपि चतुर्विंशतिः, ततोर्यन्ताश्चतुर्विंशतिः, ततः सान्ताश्चतुर्विंशतिः । मिलितास्तु विंशत्युत्तरं शतं भेदाः पमगरिसेत्यन्ता भवन्ति । सरिगमपधेति षट्स्वरप्रस्तारे तु धान्ता विंशत्युत्तरं शतं भेदाः, ततः पान्तास्तावन्त एव, ततो मान्तास्तावन्त एव, ततो गान्तास्तावन्त एव, ततो र्यन्तास्तावन्त एव, ततः सान्तास्तवन्त एव । मिलितास्तु विंशत्युत्तराणि सप्त शतानि भेदा धपमगरिसेत्यन्ता भवन्ति । सरिगमपधनीति सप्तस्वरप्रस्तारे तु विंशत्युत्तराणि सप्त शतानि न्यन्ता भेदाः, ततस्तावन्त एव धान्ताः, ततस्तावन्त एव पान्ताः, ततस्तावन्त एव मान्ताः, ततस्तावन्त एव गान्ताः, ततस्तावन्त एव र्यन्ताः, ततस्तावन्त एव सान्ताः । मिलितास्तु पञ्च सहस्राणि चत्वारिंशदुत्तराणि भेदा निधपमगरिसेत्यन्ता भवन्ति । एवं रजन्यादिषण्मूर्च्छनाक्रमाणां पूर्णानामपूर्णानां च प्रस्तारो ज्ञेयः । इति प्रस्तारः ॥ एवं प्रस्तारमुक्त्वा प्रस्तारकरणेऽप्यशक्तस्य लघुनोपायेन तत्तद्भेदपरिज्ञानाय नष्टोद्दिष्टे स्पष्टयिष्यंस्तावन्नष्टस्पष्टनं प्रतिजानीते—अथ नष्टस्पष्टनमिति । एतावतिथ इति संख्याविशेषमुक्त्वा कीदृक्स्वरूप इति स्वरूपं विषयीकृत्य यो भेदः पृच्छ्यते सोऽप्रतीयमानत्वान्नष्ट इत्युच्यते । तस्य स्पष्टनं स्वरूपेण प्रकाशनम्, करोमीति शेषः । तत्र पूर्वं सप्तस्वरादिक्रमेणोक्तामेव संख्यामेकादिक्रमेण तदुपयोगित्वेनाह—इह लेख्या इति । इह नष्टस्पष्टने क्रमस्थाङ्काः क्रमस्था अङ्का इत्थं लेख्याः स्थाप्याः ॥ ४७—४९ ॥

स्थापनमेवाह—

भूर्द्वावृतवः श्रुतिदृक् खेना नखगिरि खवेदखशराश्च ।
पात्यः क्रमान्तिमाङ्कात्प्रश्नाङ्कः शेषमाद्याद्यैः ॥ ५० ॥
भाज्यं यथार्हगुणितैस्तदनु गुणकगुणकतुल्यसंख्याकाः ।
मूलक्रमद्वितीयद्वितीयतोऽन्त्यादयो ज्ञेयाः ॥ ५१ ॥
भागाभावे पूर्वो लब्धो लोप्यो मुहुः क्रमेऽङ्कश्च ।
शिष्टः प्रागथ कथयाम्युद्दिष्टमिह स्वरोऽन्त्यस्तु ॥ ५२ ॥
यावतिथः स्यान्मूलः क्रमद्वितीयात्तया हतः प्राच्यः ।
अङ्केष्वन्त्यात्पात्योऽथोद्दिष्टान्त्यो द्वयोर्लोप्यः ॥ ५३ ॥

भूरिति । भूरेकः । द्वौ । ऋतवः षट् । श्रुतिदृक् चतुर्विंशतिः । खेनाः शतं विंशत्युत्तरम् । नखगिरि सप्तशतानि विंशत्युत्तराणि । खवेदखशराः पञ्चसहस्राणि चत्वारिंशदुत्तराणि चेति । श्रुतिदृक्, नखगिरीति च समाहारद्वन्द्वौ । एवं यथेष्टमेकस्वरादिक्रमाङ्केषु स्थापितेषु यत्कर्तव्यं तदाह—पात्य इति । क्रमस्य योऽन्तिमाङ्कस्तस्मात् प्रश्नाङ्कः प्रश्नसंख्याया योऽङ्कः स पात्यो न्यूनः कार्यः । शेषम् । अत्र वीप्सा ज्ञेया । शेषं शेषमवशिष्टमवशिष्टम् आद्याद्यैरन्त्याङ्कात्पूर्वैः पूर्वैरङ्कैर्भाज्यं हरणीयम् । कीदृशैस्तैः? यथार्हगुणितैः, यथार्हं यथायोग्यं केनचिदङ्केन ताडितैः । अन्ते पिण्डाङ्के यावन्तो भागा गच्छन्ति तावत्संख्याङ्केन ताडितैरिति यावत् । तदनु ततः परं गुणकगुणकतुल्यसंख्याकाः, यैर्यैर्गुणिता आद्याद्याङ्का भागं गृहीतवन्तस्तत्तुल्या संख्या येषां ते तादृशा अन्त्यादयो ज्ञेयाः, अन्त्यो नष्टस्यान्तिमः स्वर आदिर्येषामुपान्त्योपोपान्त्यादीनां ते द्वितीयान्ताः स्वरा व्युत्क्रमेण ज्ञेया इत्यर्थः । ते कुतो गणनीया इत्यत आह—मूलक्रमद्वितीयद्वितीयतः, मूलक्रमे यो यो द्वितीयो द्वितीयस्ततस्ततस्तावतिथसंख्याका इत्यर्थः । भागाभावे पूर्वः यदा आद्याङ्केनान्त्याङ्के भागो न गच्छति तदा मूलक्रमद्वितीयद्वितीयतो यो यः पूर्वः स एव लेख्य इत्यर्थः । ननु पृष्टस्यैकस्य नष्टभेदस्य मूलक्रमे द्वितीय एक एव, तत्कथं वीप्सा? अत आह—लब्धो लोप्य इति ।

नष्टे स्वर इति च शेषः। नष्टैर्लब्धः स्वरः क्रमे लोप्यः प्रोञ्छनीयो मुहुर्वारं वारम्। तेन क्रमेऽन्योऽन्यो द्वितीयः संभवतीति भावः। येन भागो न गच्छति सोऽप्यङ्को लोप्य इत्याह—अङ्कश्चेति। अन्येऽप्यङ्काः स्वत एव लुप्यन्त इत्यभाजनार्हस्यैव लोपविधिरित्यर्थः। न्यूनमेकं पूरयितुमाह—शिष्टः प्रागिति। शिष्टः क्रमे लुप्तेभ्योऽवशिष्टः स्वरः प्राङ्नष्टस्वरपङ्क्तौ द्वितीयात्पूर्वं देय इत्यर्थः॥

निदर्शनं यथा—तत्र पञ्चस्वरप्रस्तारे पञ्चत्रिंशत्तमो भेदः कीदृक्स्वरूप इति प्रश्ने स्थानपञ्चके (१) (२) (६) (२४) (१२०) इति क्रमस्थेष्वङ्केषु लिखितेष्वन्तिमादङ्काद्विंशत्युत्तराच्छतात् (१२०) प्रश्नाङ्के पञ्चत्रिंशदात्मके (९३) पातिते पञ्चाशीतिः (८९) शेषं भवति। ततो विंशत्युत्तरशतस्य (१२०) आद्याङ्केन चतुर्विंशत्या (२४) योग्यतया त्र्यङ्केन (३) गुणनाद्द्वासप्ततित्वमापन्नया तस्मिञ्शेषे पञ्चाशीत्यात्मके (८९) भाजिते पुनः शेषं त्रयोदश (१३) अत्र भाजकस्य गुणकस्त्र्यङ्क (३) इति मूलक्रमद्वितीयादृषभात्तृतीयसंख्याको म इति मध्यम एव नष्टे स्थाप्यते। ततो नष्टे लब्धे म इति मः क्रमे लोप्यते। ततः क्रमः सरिगपेति स्थितः। ततः पुनश्चतुर्विंशतेरप्याद्याङ्केन षडङ्केन योग्यतया द्व्यङ्केन गुणनाद्द्वादशात्मकत्वमापन्नेन त्रयोदशात्मके शेषे भाजिते पुनरेकः (१) शेषं भवति। अत्र तु भाजकस्य गुणको द्व्यङ्क इति मूलक्रमद्वितीयादृषभादेव द्वितीयो ग इति गान्धार एव नष्ट उपान्त्यः स्थाप्यते। ततो नष्टे लब्धो ग इति गान्धारः क्रमे लोप्यते। ततः क्रमः सरिपेति स्थितः। ततः पुनः षडङ्कस्याप्याद्येन द्व्यङ्केनैकाङ्कस्य शेषस्य भाजनासंभवान्मूलक्रमद्वितीयादृषभादेव पूर्वः षड्जो नष्टे उपोपान्त्यः स्थाप्यते। ततो नष्टे लब्धः षड्ज इति स क्रमे लोप्यते। ततः क्रमो रिपेति स्थितः। अङ्कश्च लोप्य इति वचनाद्द्व्यङ्कोऽपि लोप्यते। ततः पुनर्द्व्यङ्कस्याप्याद्येनैकाङ्केन योग्यतयैकाङ्केनैव गुणितेन 'एकेन गुणितं तदेव भवति' इति न्यायादेकत्वमेवापन्नेनैकात्मके शेषे भाजिते शेषशून्यं भवति। अत्र तु भाजकस्य गुणक एकाङ्क इति मूलक्रमद्वितीयात्पञ्चमात्प्रथमः प इति पञ्चम एव नष्टे उपोपान्त्यस्याप्याद्यः स्थाप्यते। ततो नष्टे लब्धः प इति क्रमे पो लोप्पते। ततः क्रमो रीति स्थितः। एवमन्त्यस्वरादयो द्वितीयस्वरान्ता नष्टभेदे चत्वारः स्वरा भवन्ति। ततः क्रमे लुप्तावशिष्टो रिः

'नष्टभेदपङ्क्तौ शिष्टः प्राक्' इति वचनात्प्राग्दीयते। एवं पञ्चत्रिंशत्तमो नष्टे भेदो रिपसगमेति स्वरूपः स्पष्टः संपद्यते। एवमन्येऽपि ज्ञेयाः। इति नष्टस्पष्टनम्॥ अथोद्दिष्टस्पष्टनं प्रतिजानीते—अथ कथयाम्युद्दिष्टमिति। स्वरूपमुक्त्वा कथितोऽयमिति संख्याविषयत्वेनैव यो भेदः पृच्छयते, स उद्दिष्टस्वरूपत्वादुद्दिष्टसंज्ञकः, तं कथयामि। संख्याविशेषपूरकत्वेनेति शेषः। तत्प्रकारमेवाह—इह स्वर इति। इहोद्दिष्टस्वरूपेऽन्त्यस्तु स्वरो मूलक्रमद्वितीयाद्यावतिथो यावतां संख्यापूरणः स्यात्। क्रमे यो द्वितीयस्तस्मादारभ्य प्रथमो द्वितीयादिर्भवेदित्यर्थः। तया, संख्ययेति शेषः। हतो गुणितः सन् अङ्केषु पूर्वोक्तेष्वेकद्विषडादिक्रमस्थाङ्केषु प्राच्य आद्योऽन्त्यात्पात्यो न्यूनः कार्यः। अथेत्यनन्तरमुद्दिष्टान्त्यः, स्वर इति शेषः। द्वयोर्लोप्यः कृतकार्यत्वादुद्दिष्टस्वरूपे मूलक्रमस्वरूपे च प्रोञ्छनीय इत्यर्थः। यावतिथ इति यावच्छब्दात् 'तस्य पूरणे—' (५-२-४८) इति डटि 'वतोरिथुक्' (५-२-५३) इतीथुगागमः॥ ५०—५३॥

क्वचिदङ्कस्यापि लोपनमाह—

अन्त्ये क्रमद्वितीयात्पूर्वे लोप्योऽङ्क आदिमस्तूष्णीम्।
एवं भूयो भूयः शेषमिहोद्दिष्टसंख्या स्यात्॥ ५४॥

अन्त्य इति। अन्त्य उद्दिष्टान्त्यस्वरे क्रमद्वितीयात्पूर्वे, सतीत्यर्थात्। आदिमोऽङ्कः परापेक्षया यः कश्चन पूर्वः स तूष्णीं लोप्यः, अकृतकृत्योऽपि प्रोञ्छनीय इत्यर्थः। एवं भूयो भूयः। पूर्वोक्तं सर्वमपि कर्म यावत्संभवं पुनः पुनरेवमेव कर्तव्यमित्यर्थः। एवं कृत्वा सिद्धमाह—शेषमिहेति। इह क्रमाङ्कपङ्क्तौ शेषं सर्वावशिष्टं तदेवोद्दिष्टस्य या संख्या प्रथमद्वितीयादिः सा स्यात्संपद्यते। निदर्शनं यथा—पञ्चस्वरप्रस्तारे रिपसगमेति स्वरूपो भेदः कतिथ इति पृष्टे, सरिगमपेति मूलक्रम उपरि स्थाप्यः, रिपसगमेत्युद्दिष्टभेदस्त्वधः स्थाप्यः। स्थानपञ्चक एवैकं द्वौ षट् चतुर्विंशतिर्विंशत्युत्तरं शतम्, (१) (२) (६) (२४) (१२०) इति क्रमस्थाङ्काश्च तदधः स्थाप्याः। तत्रोद्दिष्टान्त्यस्वरो मध्यमः क्रमे द्वितीयादृषभात्तृतीयो वर्तत इति तत्संख्यया त्र्यङ्केन गुणितः प्राच्योऽङ्कश्चतुर्विंशतिरूपो (२४) द्वासप्ततिः (७२) तामापन्नः सन् अन्त्याङ्काद्विंशत्युत्तराच्छतात्

(१२०) पात्यते। तत्र शेषमष्टचत्वारिंशत् (४८) अनन्तरं मध्यम उद्दिष्टस्वरूपे क्रमे च लोप्यते। तथा सति क्रमः सरिगपेति स्थितः। उद्दिष्टस्वरूपं रिपसगेति स्थितम्। एवं भूय इति वचनात्पुनरेवमेव कर्तव्यम्। तत्रोद्दिष्टान्त्यस्वरो गान्धारः क्रमद्वितीयात्तस्मादेव ऋषभाद्द्वितीय इति तत्संख्याया द्व्यङ्केन गुणितः प्राच्योऽङ्कः षड्रूपो (६) द्वादशतामापन्नः (१२) सन्नन्त्याङ्कादष्टचत्वारिंशतः (४८) पात्यते। तत्र तु शेषं षट्त्रिंशत् (३६) अनन्तरं ग उद्दिष्टस्वरूपे क्रमे च लोप्यते। तथा च क्रमः सरिपेति स्थितः। उद्दिष्टस्वरूपं रिपसेति स्थितम्। एवं भूयःकरणे तूद्दिष्टान्त्यस्वरः षड्जः क्रमद्वितीयात्तस्मादेव ऋषभात्पूर्व इति प्राच्यो द्व्यङ्कस्तूष्णीं लोप्यते। अनन्तरं षड्ज उद्दिष्टस्वरूपे क्रमे च लोप्यते। तथा सति क्रमो रिपेति स्थितः। उद्दिष्टस्वरूपमपि रिपेति स्थितम्। एवं भूयस्तत्रोद्दिष्टान्त्यस्वरः पञ्चमः क्रमद्वितीयात्पञ्चमादेवारभ्य प्रथम एवेति तत्संख्ययैकाङ्केन गुणितः प्राच्योऽङ्क एकरूपः 'एकेन गुणितं तदेव भवति' इति न्यायादेकत्वमापन्नः सन्नन्त्याङ्कात्षट्त्रिंशतः (३६) पात्यते। शेषं पञ्चत्रिंशत् (३५) अनन्तरं प उद्दिष्टस्वरूपे क्रमे च लोप्यते। तथा सति क्रमो रीति स्थितः। उद्दिष्टस्वरूपमपि रीत्येव स्थितम्। अतः परं मूलद्वितीयस्य प्राच्याङ्कस्य चाभावात्। एवं भूयः-करणं नास्ति। तस्मात्पञ्चत्रिंशतः सर्वावशिष्टतया रिपसगमेति भेदः पञ्चत्रि-शत्तमः संपद्यते। एवमन्यदप्युद्दिष्टभेदमात्रं ज्ञेयम्। उद्दिष्टस्य शुद्धये प्रस्तारो नष्टप्रकारो वा विलोक्यः। शार्ङ्गदेवेन तु खण्डमेरुप्रकारेण नष्टोद्दिष्टे स्पष्टीकृते। इत्युद्दिष्टम् ॥ ५४ ॥

इदानीं ग्रामस्याधेयान्तरं वर्णं सप्रभेदं लक्षयति—

गानक्रिया स्वराणां या वर्णः स कथितश्चतुर्भेदः।
स्थाय्यारोह्यवरोही संचारी चेत्यथ स्थायी ॥ ५५ ॥
स्थित्वा स्थित्वैकस्य प्रयोग आरोहणात्तथारोही।
अवरोहात्त्ववरोही संचारी तद्विमिश्रणतः ॥ ५६ ॥

गानक्रियेति। स्वराणां या गानक्रिया वक्ष्यमाणप्रकारेण गानकरणम्, उच्चारणमिति यावत्। स वर्णनात्स्वरविस्तारणाद्वर्णः कथितः। कीदृक्? चतुर्भे-

दश्चतुःप्रकारः। तानेव प्रभेदानाह—**स्थाय्यारोह्यवरोही संचारी** चेतीति। स्पष्टम्। तत्र स्थायिनं वर्णं लक्षयति—**अथ स्थायीति**। स्थित्वा स्थित्वा विलम्ब्य विलम्ब्यैकस्यैव प्रयोग उच्चारणं स्थायी। वर्ण इति शेषः सर्वत्र। सा सा सा री री री एवमादिरित्यर्थः। आरोहिणं वर्णं लक्षयति—**अरोहणात्त-थेति**। प्रयोगपदं सर्वत्र संबध्यते। आरोहणात्प्रयोगः सरिगमपधनीत्यारोही वर्णः। अवरोहिणं लक्षयति—**अवरोहात्त्विति**। अवरोहात्प्रयोगो निधपम-गरिसेत्यवरोही वर्णः। संचारिणं लक्षयति—**संचारीति**। तद्विमिश्रणतः, तेषां त्रयाणां ससारिरीसनिधासरिगेत्येवं यथायोगं विमिश्रणात्संचारी वर्णः। यत्र गानक्रियायां यस्य वर्णस्य बाहुल्यं दृश्यते तत्र तेन व्यपदेशः कर्तव्य इति ज्ञातव्यम्॥ ९९—९६॥

वर्णग्रथनविशेषरूपमलंकारं लक्षयंस्तत्संख्याविशेषं कथ्यमानत्वेन प्रति-जानीते—

**सविशेषवर्णगुम्भो ऽलंकारो ऽत्र कथयामि तद्भेदान्।**
**द्वात्रिंशतं तथा द्वौ प्रकरण इह हि परिभाषेयम्॥ ९७॥**

**सविशेषवर्णगुम्भ** इति। विशेषेण वक्ष्यमाणनियतकलादिरूपेण सहितो यो वर्णगुम्भः पूर्वोक्तवर्णग्रथनं सः अलंक्रियते गीतमनेनेत्यलंकारः। तथा च **भरतः**—

‘शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव।
अविभूषितेव कान्ता गीतिरलंकारहीना स्यात्॥’ इति।

अत्र ग्रन्थे द्वात्रिंशतं तथा द्वौ तद्भेदानलंकारभेदान्कथयामि। यद्यपि निः-शङ्कादिभिस्त्रिषष्टिरलंकारा उक्तास्तथापि तन्मध्यतश्चतुस्त्रिंशतमेव ताँल्लाघवाय कथयामीत्यर्थः। वक्ष्यमाणप्रकारेण द्वात्रिंशदपेक्षया द्वयोर्विलक्षणत्वात्पृथगुक्तिः। अलंकारेष्वेवोपयोगिनीं परिभाषां वक्तुं प्रतिजानीते—**प्रकरण इह हीति**। हिरवधारणे। इह प्रकरणे हि अलंकारप्रकरण एव इयं वक्ष्यमाणा परिभाषा व्यापिका संकेतोक्तिः॥ ९७॥

तामेवाह—

**मन्द्रः स यस्तु पूर्वः स्वर उक्तोऽसौ मृदुः प्रसन्नश्च ।**
**बिन्दुशिराः स तु लिप्यां तारो द्विगुणः स दीप्तश्च ॥ ५८ ॥**
**रेखामूर्धा लेखे प्लुतस्त्रिरुक्तेरथ प्रसन्नादिः ।**
**मन्द्रद्वयतस्तारे तद्विपरीतः प्रसन्नान्तः ॥ ५९ ॥**

**सं सं सं ; इति प्रसन्नादिः ॥ १ ॥ सं सं सं ; इति प्रसन्नान्तः ॥ २ ॥**

मन्द्रः स इति । यस्तु पूर्वः स्वरः स मन्द्र उक्त इत्यन्वयः । मध्यरूपपरापेक्षया मन्द्र एव मन्द्रः,ताररूपपरापेक्षया तु मध्योऽपि मन्द्र इत्यर्थः । मन्द्रस्यैव व्यवहाराय पर्यायान्तरे कथयति—**असौ मृदुः प्रसन्नश्चेति** । स्पष्टम् । मन्द्रस्य लेखनसंकेतं कथयति—**बिन्दुशिराः स इति** । स तु मन्द्रो लिप्यां लेखने बिन्दुयुक्तं शिर उपरिभागो यस्येति बिन्दुशिराः, ज्ञेय इति शेषः । बिन्दुशिरा इति शाकपार्थिवादित्वादुत्तरपदलोपः । तारस्यापि परिभाषणमाह—**तारो द्विगुण इति** । मन्द्ररूपपूर्वापेक्षया मध्यस्वरो द्विगुणस्तारशब्दवाच्यः, मध्यरूपपूर्वापेक्षया तु तारस्वर एव द्विगुणस्तारशब्दवाच्य इत्यर्थः । तारस्यापि पर्यायान्तरं लेखनसंकेतं चाह—**स दीप्तश्चेति** । स तारः, दीप्तो लेखे रेखामूर्धा च, दीप्तशब्दवाच्यो लिखने रेखायुक्तोपरिभागश्चेत्यर्थः । रेखामूर्धेति पूर्ववत् । प्लुतपरिभाषणमाह—**प्लुतस्त्रिरुक्तेरिति** । यः स्वरः प्लुत इत्युच्यते स त्रिवारमुच्चारणीय इत्यर्थः । त्रीन्वारानिति त्रिरिति 'द्वित्रिचतुर्भ्यः—' (५-४-१८) इति सुच् । एवं परिभाषा निरूप्य स्थायिवर्णाश्रितान्प्रसन्नादिप्रसन्नान्तप्रसन्नाद्यन्तप्रसन्नमध्यक्रमरेचिताख्यान्पञ्चालंकाराँल्लक्षयन्प्रसन्नादिं तावल्लक्षयति—**अथ प्रसन्नादिरिति** । मन्द्रद्वयतस्तारे, परे सतीति शेषः । प्रसन्नादिः, स्यादिति शेषः । द्विवारं मन्द्रस्वरमुच्चार्य यदि सकृत्तारस्वर उच्चार्यते तदा प्रसन्नादिरित्यर्थः । यथा—सं सं सं इति । अथ प्रसन्नान्तं लक्षयति—**तद्विपरीत इति** । तस्मात्प्रसन्नादेर्विपरीतः । यदि पूर्वं सकृत्तारः पश्चाद्द्विर्मन्द्रस्तदा प्रसन्नान्तः । यथा—सं सं सं इति ॥ ५८—५९ ॥

अथ प्रसन्नाद्यन्तं लक्षयति—

अन्वर्थकः प्रसन्नाद्यन्तस्तादृक्प्रसन्नमध्योऽपि ।
मृदुमध्यगो द्वितीयस्तृतीयतुर्यौ च तादृक्षौ ॥ ६० ॥
तद्वच्च पञ्चमाद्यं त्रितयं क्रमरेचितस्त्रिकल एवम् ।
स्थायिगता इति पञ्चारोहिगतास्ते पुनः सप्त ॥ ६१ ॥

**सं सं सं ; इति प्रसन्नाद्यन्तः ॥ ३ ॥ सं सं सं ; इति प्रसन्नमध्यः ॥ ४ ॥**
**संरिस (१) संगमसं (२) संपधनिसं (३) इति क्रमरेचितः ॥ ५ ॥**

**अन्वर्थक** इति । प्रसन्नाद्यन्तोऽन्वर्थकः सार्थकः प्रसन्नो मन्द्र आदिरन्तश्च यस्येति । तेनादौ मन्द्रो मध्ये तारोऽन्ते च मन्द्रो यदि तदा प्रसन्नाद्यन्तः । यथा—सं सं सं इति । अथ प्रसन्नमध्यं लक्षयति—**तादृक्प्रसन्नमध्योऽपीति** । प्रसन्नमध्योऽपि तादृक्, अन्वर्थक इत्यर्थः ; प्रसन्नो मध्ये यस्येति । तेनादौ तारो मध्ये मन्द्रोऽन्ते पुनस्तारो यदि तदा प्रसन्नमध्यः । यथा—सं सं सं इति । अथ क्रमरेचितं लक्षयति—**मृदुमध्यगो द्वितीय** इति । एवं त्रिकलः, तिस्रः कला भागा यस्य स क्रमरेचितः, स्यादिति शेषः । एवं कथम् ? तदाह—मद्रोर्मन्द्रयोर्मध्यं गच्छतीत्येवंभूतो द्वितीयो ऋषभ इत्याद्या कला । च परं तृतीयतुर्यौ गान्धारमध्यमौ तादृक्षौ मृदुमध्यगावेवेति द्वितीया कला । पञ्चमाद्यं त्रितयं तद्वच्च, पञ्चमषष्ठसप्तमाः पधनयो मृदुमध्यगा एवेति तृतीया कला । यथा—संरिसं, संगमसं, संपधनिसं इति । तान्निगमयति—**स्थायिगता इति पञ्चेति** । स्थायिनं वर्णं गता आश्रिताः ; पञ्चानामप्येषामाद्यन्तयोरेकस्वरत्वादित्यर्थः । तथा च निःशङ्कः—'येषामाद्यन्तयोरेकः स्वरस्ते स्थायिवर्णगाः' (सं० १-६-४) इति । इदानीमारोहिवर्णाश्रितान्विस्तीर्णनिष्कर्षप्रेङ्खितबिन्दुहसितसंधिप्रच्छादनाक्षिप्ताख्यान्सप्तालंकाराल्लँक्षयितुं प्रतिजानीते—**आरोहिगतास्ते पुनः सप्तेति** । स्पष्टम् ॥ ६०—६१ ॥

तत्र विस्तीर्णं लक्षयति—

यत्रारोहेत्क्रमतः सविश्रमं सप्तभिः स्वरैर्दीर्घैः ।
विस्तीर्णोऽयं शीघ्रं द्विर्गदितैस्तैस्तु निष्कर्षः ॥ ६२ ॥

सा री गा मा पा धा नी ॥ इति विस्तीर्णः ॥ १ ॥
सस रिरि गग मम पप धध निनि ॥ इति निष्कर्षः ॥ २ ॥

यत्रारोहेदिति । यत्र दीर्घैर्लम्बीकृतैः सप्तभिः स्वरैः सविश्रमं यथा तथा, स्थित्वा स्थित्वेत्यर्थः । क्रमत आरोहेत्सोऽयं विस्तीर्णः । यत्रेति संबन्धात्स इति लभ्यते । यथा—सा री गा मा पा धा नी इति । निष्कर्षं लक्षयति—शीघ्रं द्विरिति । द्विर्द्विवारं शीघ्रं द्रुतं गदितैस्तैस्तु सप्तभिरेव स्वरैर्निष्कर्षः । यथा—सस रिरिगग मम पप धध निनि इति ॥ ६२ ॥

प्रेङ्खितं लक्षयति—

यत्रारोद्द्वौ द्वौ दोलितचरमं विहाय तु क्रमतः ।
पूर्वं पूर्वं प्रेङ्खित इति स तु बिन्दुर्यदारोहे ॥ ६३ ॥
क्रमतः प्लुतः सकृच्च प्लुतः सकृत्स्यात्प्लुतः सकृत्प्लुतकः ।
ह्रसितो यत्रैकोत्तरवृद्ध्यावृत्तिः स्वरारोहः ॥ ६४ ॥

सरी रिगा गमा मपा पधा धनी ॥ इति प्रेङ्खितः ॥ ३ ॥
ससससरि गगगम पपपध निनिनि ॥ इति बिन्दुः ॥ ४ ॥
सा रीरी गगगा ममममा पपपपपा धधधधधधा निनिनिनिनिनिनिनी ॥५॥

यत्रारोहेदिति । यत्र दोलितचरमम्, दोलितः कम्पितश्चरमः प्रान्त्यः, द्वितीय इति यावत्, यस्मिन्कर्मणि तथा द्वौ द्वावारोहेत्स प्रेङ्खित इति । किं कृत्वा? क्रमतः पूर्वं पूर्वं तु विहाय त्यक्त्वा । प्रथमस्वरं गीत्वा द्वितीयमान्दोलितं गायेत् । ततः प्रथमत्यागे द्वितीयं गीत्वा तृतीयमान्दोलितं गायेत् । ततो द्विती-यादित्यागे तृतीयादिकं गीत्वा चतुर्थादिकमान्दोल्य गायेदित्यर्थः । यथा—सरी रिगा गमा मपा पधा धनी इति । बिन्दुं लक्षयति—स बिन्दुर्यदारोह इति । यदारोहे यस्यारोहे क्रमतः प्लुतः सकृच्चेत्यादिः स्यात् । स्वर इति शेषः । स बिन्दुः । तत्र प्रथमस्त्रिरुच्चार्यते, द्वितीय एकवारम्, तृतीयस्त्रिः, चतुर्थः सकृत्, पञ्चमस्त्रिः, षष्ठः सकृत्, सप्तमस्त्रिरित्यर्थः । यथा—ससससरि गगगम पपपध

निनिनि इति। सकृदिति 'एकस्य सकृच्च' इति साधु। प्लुतक इति स्वार्थे कः। हसितं लक्षयति—हसितो यत्रेति। यत्र एकोत्तरा वृद्धिर्यासां तादृश्य आवृत्तय आवर्तनानि यस्मिन्स एकोत्तरवृद्ध्यावृत्तिः स्वरारोहः सप्तस्वरारोहणं स हसितः। स इति यत्रेति संबन्धात्। यस्मिन्प्रथमः स्वरः सकृत, द्वितीयो द्विः, तृतीयस्त्रिः, चतुर्थश्चतुः, पञ्चमः पञ्चकृत्व इत्याद्युच्चार्यते स हसित इत्यर्थः। यथा—स रिरि गगग मममम पपपपप इत्यादि ॥ ६३—६४ ॥

संधिप्रच्छादनं लक्षयति—

**संधिप्रच्छादनके त्रिस्वरकाद्या कला तथान्ये द्वे।**
**स्वस्वप्राच्यान्त्यस्वरपूर्वे तद्वत्स आक्षिप्तः ॥ ६५ ॥**
**मध्यमहीनद्विद्विस्वरमाद्यकलान्तिमादिमं भवति।**
**यत्र कलात्रयमेते पुनरवरोहिश्रिताः सप्त ॥ ६६ ॥**

**सरिगा सगमा पधनी ॥ इति संधिप्रच्छादनः ॥ ६ ॥**
**सगा गपा पनी ॥ इत्याक्षिप्तः ॥ ७ ॥**

**संधिप्रच्छादनक** इति। अस्मिन्नाद्या प्रथमा कला त्रिस्वरका तथान्ये द्वे, कले इति शेषः। स्वस्वप्राच्यान्त्यस्वरपूर्वे स्वस्वप्राच्या आत्मात्मपूर्वा या कला तस्या अन्त्यस्वरः पूर्व आदिमो ययोस्ते तद्वत्, त्रिस्वरके एव भवत इति शेषः। यथा—सरिग गमप पधनि इति। आक्षिप्तं लक्षयति—स आक्षिप्त इति। मध्यमेन मध्यभवेन हीनौ रहितौ द्वौ द्वौ स्वरौ यस्मिंस्तादृशं कलात्रयं यत्र भवति स आक्षिप्तः। कथं भवति? आद्यकलाया योऽन्तिमः स आदिमः पूर्वो यस्मिन्कर्मणीति क्रियाविशेषणम्। वीप्सात्र ज्ञेया। यथा—सग गप पनि इति। अथैतानेव विस्तीर्णादीन्सप्तावरोहिवर्णाश्रितत्वेनापि संख्याद्वैगुण्याय कथयति—एते पुनरवरोहिश्रिताः सप्तेति। स्पष्टम्। यथा—नीधा पा मा गा री सा इति विस्तीर्ण इत्यादि ॥ ६९—६६ ॥

अथ संचारिवर्णाश्रितान्प्रसादप्रेङ्खरञ्जिताक्षेपपरिवर्तनिःकूजितोद्वाहितोद्घट्टितहुंकारस्खलितक्रमश्येनह्रादमानाख्यांस्त्रयोदशालंकारांल्लक्षयितुं प्रतिजानीते—

संचारिगास्त्रयोदश पूर्वः पूर्वः परस्य यदि भवति ।
आद्यन्तयोः प्रसादः स्यात्स प्रेङ्खः कला यस्य ॥ ६७ ॥
कुरुते गमनागमने द्विस्वरकाद्या कलास्तथैवान्याः ।
एकैकस्वरहान्या रञ्जित आदिमकलाद्यान्त्या ॥ ६८ ॥
द्विःप्रथमतृतीयद्वैतीयीकास्तद्वदुज्झितैकैकाः ।
आक्षेपे त्रिस्वरकाद्यकलान्याः परपरग्रहणात् ॥ ६९ ॥
हित्वा पूर्वं पूर्वं समास्तयाथ परिवर्त आद्यकला ।
उक्ता द्वितीयमुक्ता त्रिस्वरका मुक्तमुक्ताद्याः ॥ ७० ॥
अन्यकलाः पूर्वसमा भवन्ति कूजिते प्रसादस्य ।
सकलाः कलाः स्युराद्यात्तृतीयमेत्याद्यगानेन ॥ ७१ ॥

सरिस रिगरि गमग मपम पधप धनिध ॥ इति प्रसादः ॥ १ ॥
सरिरिस रिगागरि गममग मपपम पधधप धनिनिध ॥ इति प्रेङ्खः ॥
सगरि सगरिस रिमग रिमगरि गपम गपमग मधप
मधपम पनिध पनिधप ॥ इति रञ्जितः ॥ ३ ॥
सरिगा रिगमा गमपा मपधा पधनी ॥ इत्याक्षेपः ॥ ४ ॥
सगमा रिमपा गपधा मधनी ॥ इति परिवर्तः ॥ ५ ॥
सरि सगसरिग रिमरिगम गपग मप मधम पध पनिप ॥ इति निःकूजितः ॥ ६ ॥

संचारिगास्त्रयोदशेति । संचारिणं वर्णं गच्छन्ति संचारिगास्त्रयोदशालंकाराः । तत्र प्रसादं लक्षयति—पूर्वः पूर्व इति । यदि पूर्वः पूर्वः परस्याद्यन्तयोर्भवति । अत्र पूर्वः पूर्व इत्युक्तेः परस्य परस्येति ज्ञेयम् । आदौ पूर्वः स्वरः, मध्ये तत्परः स्वरः, अन्ते च पूर्वः स्वर एव, एवं द्वितीय आदावन्ते च, तृतीयो मध्य इत्यादि, तर्हि प्रसादः स्यात् । तर्हीति यदिसंबन्धात् । यथा—सरिस रिगरि गमग मपम पधप धनिध इति । प्रेङ्खं लक्षयति—स प्रेङ्खः कला यस्येति । यस्य द्विस्वरकाद्या कला गमनागमने आरोहावरोहौ कुरुते । अन्या अन्यकलाः ।

एकैकस्वरस्य या हानिस्तया, उपलक्षिता इत्यर्थात् । तथैव स्युरिति शेषः । एकमेकं हित्वा द्विस्वरा एव सत्य आराहावरोहौ कुर्वत इत्यर्थः । स प्रेङ्खः । यथा— सरिरिस रिगगरि गममग मपपम पधधप धनिनिध इति । रञ्जितं लक्षयति— **रञ्जित आदिमकलाद्यान्त्येति** । रञ्जिते आदिमकला द्विर्द्विरुक्ताः प्रथमतृतीयकमध्यमा यस्यां सा द्विःप्रथमतृतीयकमध्यमा, तथा आद्यः प्रथमस्वरोऽन्त्यो यस्याः सा आद्यान्त्या । प्रथमतृतीयद्वितीयान्द्विरुच्चार्य पुनरन्ते प्रथम उच्चार्यत इत्यर्थः । परा अन्यकलाः उज्झितस्त्यक्त एकैको यासु तथाविधाः सत्यस्तद्वत् । तास्वपि प्रथमतृतीयद्वितीयांस्तद्वद्द्विरुच्चार्य पुनरन्ते प्रथम उच्चार्यत इत्यर्थः । यथा— सगरिसगरिस रिमगरिमगरि गपमगपमग मधपमधपम पनिधपनिधप इति ॥ आक्षेपं लक्षयति—**आक्षेप इति** । आक्षेपे आद्या कला त्रिस्वरका, अन्याः कलाः पूर्वं पूर्वं हित्वा त्यक्त्वा परपरग्रहणात्परस्य परस्य यद्ग्रहणमङ्गीकारस्तस्मात, स्युरिति शेषः । कीदृश्यस्ताः? तया आद्यकलया समाः, त्रिस्वरत्वेन तुल्या इत्यर्थः । यथा—सरिग रिगम गमप मपध पधनि इति ॥ परिवर्तं लक्षयति— **अथ परिवर्त इति** । अस्मिन्नाद्यकला द्वितीयमुक्ता द्वितीयेन त्यक्ता त्रिस्वरकोक्ता । अन्यकला मुक्तमुक्ताद्याः, यः पूर्वं पूर्वं त्यक्तः स्वरः स आद्यः प्रथमो यासां तादृश्यः सत्यः पूर्वसमा भवन्ति, आद्यकलावद्द्वितीयपरित्यागेन त्रिस्वरा इत्यर्थः । यथा—सगम रिमप गपध मधनि इति ॥ निःकूजितं लक्षयति—**निःकूजित इति** । तस्मिन्प्रसादस्य पूर्वोक्तस्य सकलाः कलाः प्रथमद्वितीयप्रथमस्वरा द्वितीयतृतीयद्वितीयस्वरेत्यादिरूपाः, आद्यात्प्रथमात्तृतीयमेत्योच्चार्याद्यगानेन स्युः । अत्र सकला इत्युक्तेः आद्यादाद्यात्, तृतीयं तृतीयम, आद्याद्यगानेनेति वीप्सा ज्ञेया । यथा—सरिसगस रिगरिमरि गमगपग मपमधम पधपनिप इति ॥ ६७—७१ ॥

उद्घाहितं लक्षयति—

**उद्घाहिते त्रयं प्राङ्मध्यगतश्चापराः कलास्त्यक्त्वा ।**
**पूर्वं पूर्वं तादृग्विधाःस्युरुद्धट्टिते त्वाद्यात् ॥ ७२ ॥**
**गीत्वा स्वरद्वयं पञ्चमतश्चतुरः स्वरान्समारोहेत् ।**
**आद्या कलैवमन्ये त्यागात्पूर्वस्य पूर्वस्य ॥ ७३ ॥**

**सरिगरि रिगमग गमपम मपधप पधनिध ॥ इत्युद्वाहितः ॥ ७ ॥**

**सरि पमगरि रिग धपमग गमनिधपम ॥ इत्युद्धट्टितः ॥ ८ ॥**

उद्वाहित इति। अस्मिन्प्राक्पूर्वस्यां कलायां त्रयं त्रयः स्वरा मध्यगतो द्वितीयश्च। अपराः कलाः पूर्वं पूर्वं त्यक्त्वा तादृग्विधाः पूर्वकलाप्रकाराः स्युः। द्वितीयतृतीयादीनारभ्य त्रिस्वरकाः स्वस्वद्वितीयसहिताश्चेत्यर्थः। यथा—सरिगरि रिगमग गमपम मपधप पधनिध इति ॥ उद्धट्टितं लक्षयति—**उद्धट्टिते त्वाद्या**-दिति। उद्धट्टिते तु चेत् आद्यात्प्रथमादारभ्य स्वरद्वयं गीत्वा ततः पञ्चमतः आद्याद्यः पञ्चमस्तमारभ्य चतुरः स्वरानवरोहेत्, तर्हीत्यर्थात्। आद्या कला, भवतीति शेषः। अन्ये कले पूर्वस्य पूर्वस्य त्यागादेवम्। तयोरपि द्वौ द्वौ स्वरौ गीत्वा, आद्यादाद्याद्यः पञ्चमः पञ्चमस्तं तमारभ्य स्वरचतुष्टयमवरोहेदित्यर्थः। यथा—सरिपमगरि रिगधपमग गमनिधपम इति। आद्यात्पञ्चमत इति च ल्यब्लोपे कर्मणि पञ्चमी ॥ ७२—७३ ॥

हुंकारं लक्षयति—

**हुंकारे द्विस्वरका कलादिमान्त्यं विनावरोहन्ती।**
**एकैकोत्तरवृद्धस्वराः स्युरपराः कलास्तद्वत् ॥ ७४ ॥**

**सरिस सरिगरिस सरिगमगरिस सरिगमपमगरिस सरिगमपधपम-गरिस सरिगमपधनिधपमगरिस ॥ इति हुंकारः ॥ ९ ॥**

हुंकार इति। अस्मिन्नादिमा कला द्विस्वरका सती, अन्त्यं विनावरो-हन्ती, स्यादिति शेषः। प्रथमद्वितीयप्रथमस्वरूपेत्यर्थः। अपराः कला एकैकोत्तर-वृद्धाः स्वरा यासु तास्तद्वत्स्युः। द्वितीयकला त्रिस्वरा अन्त्यं विनावरोहन्ती च, एवं तृतीयादयश्चतुरादिस्वरका अन्त्यं विनावरोहन्त्यश्चेत्यर्थः। यथा—सरिस सरिगरिस सरिगमगरिस सरिगमपमगरिस सरिगमपधपमगरिस सरिगमपधनिध-पमगरिस इति ॥ ७४ ॥

स्खलितं लक्षयति—

**स्खलिते चतुःस्वराद्या विपरीतान्तर्द्वया गतागतभृत्।**
**प्राच्यप्राच्यत्यागाज्ज्ञेया इतराः कलास्तद्वत् ॥ ७५ ॥**

सगरिम मरिगसरिमगप पगमरिगपमध धमपगमधपनि
निपधम ॥ इति स्खलितः ॥ १० ॥

स्खलित इति । अस्मिन्नाद्या, कलेति प्रकरणात्, चतुःस्वरा, तथा विपरीतमन्तर्मध्ये द्वयं स्वरद्वयं यस्याः सा प्रथमतृतीयद्वितीयचतुर्थस्वरूपा, तथा गतागतभृदारोहावरोहधारिणी । इतराः कलाः प्राच्यप्राच्यत्यागात्पूर्वपूर्वत्यागात्तद्वज्ज्ञेयाः चतुःस्वरका विपरीतमध्यमस्वरद्वयास्तथैव पुनरवरोहवत्यश्चेत्यर्थः । यथा—सगरिममरिगस रिमगपपगमरि गपमधधमपग मधपनिनिपधम इति ॥ ७५ ॥

क्रमं लक्षयति—

द्वित्रिचतुःस्वरकलकाः प्रथमादिपुरःसराः क्रमे क्रमतः ।
तिस्रस्तिस्रः श्येनः संवादिद्वन्द्वतः क्रमतः ॥ ७६ ॥

सरि सरिग सरिगमरिग रिगम रिगमपगम गमप
गमपधमप मपध मपधनि ॥ इति क्रमः ॥ ११ ॥
सपा रिधा गनी मसा ॥ इति श्येनः ॥ १२ ॥

द्वित्रिचतुरिति । क्रमे क्रमतः प्रथमादिपुरःसरास्तिस्रस्तिस्रः, ज्ञेया इति शेषः । तत्र प्रथमपुरःसरा द्विस्वरा, प्रथमपुरःसरा त्रिस्वरा, प्रथमपुरःसरा चतुःस्वरेति तिस्रः कलाः । तथा द्वितीयपुरःसरा द्विस्वरा, द्वितीयपुरःसरा त्रिस्वरा, द्वितीयपुरःसरा चतुःस्वरेति तिस्रः कलाः । एवं तृतीयपुरःसरा द्विस्वरादयस्तिस्रः, चतुर्थपुरःसरा अपि द्विस्वरादयस्तिस्रः । यथा—सरिसरिगसरिगम रिगरिगमरिगमप गमगमपगमपध मपमपधमपधनि इति ॥ श्येनं लक्षयति—श्येनः संवादीति । श्येनः संवादिनामन्तर्गतद्वादशश्रुतिकानां स्वराणां यानि द्वन्द्वानि युग्मानि तैः क्रमतः श्येनः, स्यादिति शेषः । यद्यप्यन्तर्गतश्रुत्यष्टकत्वेन समेत्यपि युग्मं संभवति, तथापि क्रमत इत्युक्तेः सरिगमाद्यानि चत्वारि युग्मानि । यथा—सप रिध गनि मस इति । तथा च निःशङ्कः—'श्येनः संवादियुग्मकः । क्रमात्सरिगमाद्यैः स्यात्' (सं० १-६-४२, ४४) इति । द्वन्द्वत इति सार्वविभक्तिकस्तसिः ॥ ७६ ॥

ह्लादमानं लक्षयति—

स्याद्ध्रादमान आद्यस्तृतीयको ऽथ द्वितीय आद्यश्च ।
मुक्त्वैकैकं पुनरिति परमत एते ऽवरोहे ऽपि ॥ ७७ ॥

सगरिस रिमगरि गपमग मधपम पनिधप ॥ इति ह्लादमानः ॥१३॥

स्याद्ध्रादमान इति। अस्मिन्नाद्यः अथेति ततः परं तृतीयो द्वितीय आद्यश्च, इत्येका कलेत्यर्थात्। कलान्तराण्यपि कथयति—मुक्त्वैकैकं पुनरिति। एकमेकं त्यक्त्वा प्रथमतृतीयद्वितीप्रथमस्वरूपा द्वितीयादयः कला ज्ञेया इत्यर्थः। यथा—सगरिस रिमगरि गपमग मधपम पनिधप इति। इति पञ्च सप्त सप्त त्रयोदश च मिलिता द्वात्रिंशदलंकाराः। निःशङ्कमतेन संचार्यलंकारानवरोहेऽप्याह —परमत इति। एते संचारिवर्णालंकाराः परमतेऽवरोहेऽपि, भवन्तीति शेषः। तथा च शार्ङ्गदेवः—

'एते संचार्यलंकारा आरोहेण प्रदर्शिताः।
एतानेवावरोहेऽपि प्राह श्रीकरणाग्रणीः ॥' (सं० १-६-५३)

इति। यथा—धनिध पधप मपम गमग रिगरि सरिस इति प्रसादः। एवं प्रेङ्खादयो ऽपि द्वादश ॥ ७७ ॥

एवं वर्णचतुष्टयाश्रितान्द्वात्रिंशदलंकारान्निरूप्यावशिष्टसंख्यानुवादपूर्वं लोकप्रसिद्धतरसप्तालंकारमध्यस्थौ तारमन्द्रप्रसन्नमन्द्रतारप्रसन्नाख्यालंकारौ लक्षयन्प्रथमं लक्षयति—

द्वौ यावपरौ तत्रारुह्याद्यादष्टमस्वरावधिकम् ।
आद्यं यस्मिन्गायेत्स तारमन्द्रप्रसन्नाख्यः ॥ ७८ ॥

संरिगमपधनिससं ॥ इति तारमन्द्रप्रसन्नः ॥ १ ॥

द्वौ यावपराविति। तत्र तयोर्मध्ये स तारमन्द्रप्रसन्नाख्यः, यस्मिन्नाद्यात्प्रथमस्वरमारभ्य अष्टमस्वरोऽवधिर्यत्रेत्यष्टमस्वरावधिकमारुह्य प्रथमस्वराद्यष्टस्वरा-

न्गीत्वाद्यं गायेत् । यथा—संरिगमपधनिससं इति । परं तु प्रथमकलेयम् । अस्य द्वितीयादिकला अग्रे वक्ष्यन्ते ॥ ७८ ॥

द्वितीयं लक्षयति—

आद्यत उत्क्रम्याष्टममवरोहः प्राक्तनस्य यत्र भवेत् ।
स्वरसप्तकस्य गदितः समन्द्रतारप्रसन्नश्च ॥ ७९ ॥

संसनिधपमगरिसं ॥ इति मन्द्रतारप्रसन्नः ॥ २ ॥

आद्यत इति । यत्र आद्यतोऽष्टममुत्क्रम्य । आद्यं गीत्वा मध्यस्थानं विहायाष्टमं च गीत्वेत्यर्थः । प्राक्तनस्याष्टमात्पूर्वस्य स्वरसप्तकस्यावरोहो वैपरीत्येन गानं भवेत् । स च मन्द्रतारप्रसन्नो गदितः । यथा—संसनिधपमगरिसं इति । इयमप्यस्य प्रथमकला । अपरा वक्ष्यन्ते ॥ ७९ ॥

द्वयोरपि द्वितीयादिकाः कलाः कथयति—

पूर्वैकैकत्यागात्तयोर्द्वितीयादिकाः कला ज्ञेयाः ।
त इति चतुस्त्रिंशदिह हि परं तु तेषामनन्तत्वम् ॥ ८० ॥

पूर्वैकैकेति । तयोस्तारमन्द्रप्रसन्नमन्द्रतारप्रसन्नयोर्द्वितीयादिकाः कलाः पूर्वं योऽयमेकैकस्तस्य त्यागाज्ज्ञेयाः । यथा—रिंगमपधनिसरिरिं इत्यादयः षट् तारमन्द्रप्रसन्नस्य कलाः । यथा च—रिंरिसनिधपमगरिं इत्यादयश्च षट् मन्द्रतारप्रसन्नस्य कलाः । उक्तानलंकारान्समुदितत्वेन निगमयति—त इति चतुस्त्रिंशदिति । इह हि ग्रन्थे अलंकारा इति चतुस्त्रिंशत् । अलंकाराणां सामस्त्येन कथनं प्राचीनैरप्यशक्यमित्याह—परं तु तेषामनन्तत्वमिति । स्पष्टम् । तथा च निःशङ्कः—

'इति प्रसिद्धालंकारास्त्रिषष्टिरुदिता मया ।
अनन्तत्वात्तु शास्त्रे न सामस्त्येन प्रकीर्तिताः ॥' (सं० १-६-६३)

इति ॥ ८० ॥

अलंकारनिरूपणे प्रयोजनं कथयन्गानसिद्धये तदभ्यासं विधत्ते—

**अलमेते ऽलंकारा रञ्जनलब्ध्यै स्वरावबोधाय ।**
**वर्णाङ्गव्यासाय च तदवश्यं पूर्वमभ्यस्याः ॥ ८१ ॥**

अलमेत इति । एतेऽलंकारा अलं समर्थाः । कस्मै ? रञ्जनलब्ध्यै स्वराणां रक्तिलाभाय च पुनः स्वराणां योऽवबोधः स्वरूपज्ञानं तस्मै, पुनर्वर्णाङ्गानां स्थाय्यादीनां यो व्यासो विस्तारस्तस्मै च । तत्तस्मादवश्यं पूर्वमादावभ्यस्या अलंकारा अभ्यसनीया इत्यर्थः । तथा च निःशङ्कः—

'रक्तिलाभः स्वरज्ञानं वर्णाङ्गानां विचित्रता ।
इति प्रयोजनान्याहुरलंकारनिरूपणे ॥' (सं० १-६-६४)

इति ॥ ८१ ॥

एवं मूर्छनाद्यलंकारान्तान्ग्रामाधेयान्निरूप्य वक्ष्यमाणरागाणामपि ग्रामाधेयत्वात्तदविनाभावित्वेन पारंपर्यतो ग्रामाधेयान्ग्रहादीनपि लक्षयति—

**स्वर आदिस्थो गीते ग्रहःप्रयोगबहुलोऽंश आदिष्टः ।**
**गीतिसमाप्तिविधायी न्यासः प्रतिरागमेते स्युः ॥ ८२ ॥**

**स्वर आदिस्थ** इति । गीते रञ्जकस्वरसंदर्भरूपे रागादौ आदिस्थ उपक्रमे गृह्यमाणः षड्जाद्यन्यतमः स्वरः ग्रह आदिष्टः कथितः । आदिष्टपदं मध्यपठितमपि ग्रहन्यासाभ्यामपि संबध्यते । प्रयोगबहुलः रुच्या पुनः पुनरावर्त्यमानः स्वरः अंश आदिष्टः । गीतिसमाप्तिविधायी रागाद्युपसंहारकः स्वरः, न्यस्यते समाप्यते गीतमनेनेति न्यास आदिष्टः । नन्वपन्याससंन्यासविन्यासानामन्येषामपि ग्रहादिवत्सद्भावात्कथं त्रय एवेह लक्षिता इत्यत आह—**प्रतिरागमेते स्युरिति** । ग्रन्थप्रतिपाद्येषु रागमात्रेषु त्रय एवैते ऽव्यभिचारेण सन्ति । अपन्यासादयस्तु गीतिखण्डरूपायां विदार्यामेवेति काचित्कत्वेन, नेह ते लक्षिता इति भावः ॥ ८२ ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ।
प्रथमः श्रुतिस्वरादे रागविबोधे विवेकोऽयम् ॥ ८३ ॥

सर्वमुक्तं विवेकनाम्ना ग्रन्थैकदेशावच्छेदकविशेषेण निगमयति—सकलकलेति । अयं श्रुतिस्वरादेः श्रुतिस्वरादिपदार्थजातसंबन्धी विवेकः; विविच्यन्ते प्राकरणिकपदार्था अस्मिन्निति विवेकः रागविबोधे प्रथमः ॥ ८३ ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ।
रागविबोधविवेकः प्रथमज एवं मनाग्विवृतः ॥

इति श्रीसोमनाथनिर्मिते रागविबोधे प्रथमो विवेकः ॥ १ ॥

# द्वितीयो विवेकः

रागविबोधनहेतोरिह मेला ये मयाभिधास्यन्ते ।
तदभिव्यक्तिनिदानं वीणादौ वर्ण्यते रौद्री ॥ १ ॥

एवं श्रुतिस्वरादिनिरूपणानन्तरं रागाणां निरूपणस्यावसरः प्राप्तः; ते तु मेलैः प्रकाश्यन्ते; मेलाश्च वीणया अभिव्यज्यन्त इति रुद्रवीणानिरूपणमादौ प्रतिजानीते—रागविबोधनहेतोरिति। इह ग्रन्थे ये मेलाः, मिलन्ति वर्गीभवन्ति रागा येष्विति तदाश्रयाः स्वरसंस्थानविशेषाः, 'थाट' इति भाषायाम्, रागविबोधनहेतोर्मया अभिधास्यन्ते तृतीयविवेके कथयिष्यन्ते। तदभिव्यक्तिनिदानं तन्मेलानां प्रकाशन आदिकारणम्, रौद्री रुद्रसंबन्धिनी, रुद्रप्रियेति यावत्; वीणा आदौ वर्ण्यते। रौद्रीति 'तस्येदम्' इत्यणि 'टिड्ढाणञ्—' इति ङीप् ॥ १ ॥

ननु स्वरमण्डलादावपि मेला अभिव्यज्यन्ते; तत्किमस्या एव निरूपणेनेत्याशङ्क्य, अस्यास्तेषु तेष्वङ्गेषु तत्तद्देवताऽधिष्ठानान्महापातकनाशकतयोत्कर्षमाह—

शंभुर्दण्डो गौरी तन्तुर्यस्या रमापतिः ककुभः ।
मा पत्रिका विरिञ्चिस्तुम्बं वागीश्वरी नाभिः ॥ २ ॥
अहिपो दोरक इन्दुर्जीवो ऽर्कः सारिकाश्च वीणा सा ।
अपि हरति दृष्टमात्रा देवमयत्वान्महापापम् ॥ ३ ॥

शंभुरिति द्वाभ्याम्। सा वीणा देवमयत्वाद्देवप्रचुरत्वाद्देवस्वरूपत्वाद्वा दृष्टमात्रापि महापापं ब्रह्महत्यादिकं हरति, किमुत स्पृष्टेत्यर्थात्। अपि हरतीत्यपि-

भिन्नक्रमः। देवमयत्वमेवाह—शंभुरिति। यस्या दण्डः शंभुः। शंभोरधिष्ठानाच्छंभुरुच्यत आधाराधेययोरभेदोपचारतः। एवं गौर्यादिषु। यस्यास्तन्तुस्तन्त्रिका गौरी पार्वती। ककुभः प्रसेवको वक्ष्यमाणलक्षणः। 'कहो' इति भाषायाम्। स रमापतिः। पत्रिका ककुभोर्ध्वभागस्था नादातिशयहेतुर्लोहपट्टिका। सा मा लक्ष्मीः। तुम्बमलाबूफलं विरिञ्चिर्ब्रह्मा। नाभिर्वक्ष्यमाणलक्षणा। 'चुम्बकी' इति भाषायाम्। सा वागीश्वरी सरस्वती। दोरको नागपाशयुता तन्त्र्या बन्धनरज्जुः। सोऽहिपो वासुकिः। जीवा वक्ष्यमाणलक्षणा जिह्वाली। 'झारा' इति भाषायाम्। सेन्दुश्चन्द्रः। सारिका वक्ष्यमाणलक्षणाः। ता अर्कः सूर्यः। तथा च शार्ङ्गदेवः—

'दर्शनस्पर्शने चास्या भोगस्वर्गापवर्गदे।
पुनीतो विप्रहत्यादिपातकैः पतितं जनम्॥
दण्डः शंभुरुमा तन्त्रीः ककुभः कमलापतिः।
इन्दिरा पत्रिका ब्रह्मा तुम्बं नाभिः सरस्वती॥
दोरको वासुकिर्जीवा सुधांशुः सारिका रविः।
सर्वदेवमयी तस्माद्वीणेयं सर्वमङ्गला'॥ इति। (सं० ६-५४-५६)

सर्वदेवमयीत्युक्त्या यथासंभवमन्येषामङ्गानां प्रत्यङ्गानामपि तत्तद्देवतात्वमेव सूचितम्। ग्रन्थान्तरे तु सारिकाश्रेणेः सूर्यत्वं कीलकद्वयस्याश्विनीसुतत्वं मेढकस्य शक्रत्वमपि साक्षात्कथितम्। 'प्रकृतिः सर्ववीणानामेषा' (सं० ६-५३) इति शार्ङ्गदेवोक्तेः। विकृतेरन्यवीणाया अपि 'प्रकृतिवद्विकृतिः' इति न्यायात्तथात्वमेव बोद्धव्यम्॥ २, ३॥

न केवलं पापापहारितया अस्याः श्रैष्ठ्यम्, किं तु धर्मादिचतुष्टयसाधनतयापीत्याह धर्मस्तयेति सार्धद्वयेनाक्षरषट्कन्यूनेन।

**धर्मस्तयाश्वमेधे गानविधेर्ब्राह्मणाविति श्रुतितः।**
**वीणाप्रियेण राज्ञार्प्यते द्रुतं वैणिकायार्थः॥ ४॥**
**तस्माद्गायन्तमिति श्रुतेस्तया गायतः स्फुटः कामः।**
**वीणावादनतत्त्वेति याज्ञवल्क्यस्मृतेः स्मृतो मोक्षः॥ ५॥**

**इति पुरुषार्थचतुष्टयसाधनमपि साधिका च सर्वाभ्यः ।**
**द्रुतकारिणी स्वरगतेः सारीभिर्मञ्जुलतमरवा ॥ ६ ॥**

धर्म इति । तया वीणया धर्मः पुण्यम्, फलं भवतीति शेषः । कुतः ? अश्वमेधे तद्यागप्रकरणे ब्राह्मणाविति श्रुतितः 'ब्राह्मणौ वीणागाथिनौ गायतः, ब्राह्मणोऽन्यो गायेत्' (तै० ब्रा० ३-९-१४-१) इति श्रुतेस्तया वीणया गानविधेर्गानचोदनात् । तयेत्युभयत्रापि संबध्यते । सांगात्कर्मणः फलावश्यंभावनियम इति वीणागानरूपाङ्गवैकल्ये तु तद्धानिः स्यादिति भावः । अर्थसाधनत्वं तु वीणाप्रियेण वीणागानरुचिना राज्ञा वैणिकाय, वीणा तद्वादनं शिल्पमस्येति वैणिकस्तस्मा अर्थो धनं द्रुतं सपद्यर्प्यते दीयते, प्रसिद्धमेतदित्यर्थः । वैणिकायेति 'शिल्पम्' (४-४-५५) इति ठक् । कामसाधनत्वं तु 'तस्माद्वायन्तम्' इति श्रुतेः, तया वीणया गायतो गातुः पुंसः कामः स्त्रीभोगः स्फुटो लोकप्रसिद्धः । मोक्षसाधनत्वं तु वीणावादनतत्त्वेति ।

'वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं स गच्छति ॥' (या० प्रा० ४-११५)

इति याज्ञवल्क्यस्मृतेर्मोक्षः स्मृत उक्तः, इति पुरुषार्थानां यच्चतुष्टयं तस्य साधनमपि संपादिका च रुद्रवीणा । अपिश्चार्थे । प्रकारान्तरद्वयेनाप्यस्याः श्रैष्ठ्यमाह—अधिका चेति । सा सर्वाभ्यो ऽधिका च । सेतीहापि संबध्यते । हेतुगर्भं विशेषणद्वयमाह—द्रुतेति । मञ्जुलेति । सारीभिः पूर्वोक्तसारिकाभिः स्वरगतेः स्वरज्ञानस्य द्रुतकारिणी । वीणायां सारीसहितायां बालानां शीघ्रं श्रुतिस्वरज्ञानं भवति । सारीरहितायां तु चिरकालेनेति भावः । मञ्जुलतमो ऽतिशयितकोमलो रवो ध्वनिर्यस्याः सा । सारीभिरित्यत्रापि संबध्यते । यथा सारीवीणाया नादे माधुर्यं न तथा अन्यवीणाया इति लोकप्रसिद्धमेवेति भावः ॥४-६॥

एवं श्रुतिस्मृतिबोधितत्वं निगमयन्वीणावादनस्य शिष्टाङ्गीकृतत्वादप्यङ्गीकारं विधत्ते—

**श्रुत्या स्मृत्या दृष्टां रुद्रेष्टां नारदादिभिर्जुष्टाम् ।**
**कलयन्त्वलयं वीणां सन्तः संतोषपोषार्थम् ॥ ७ ॥**

श्रुत्येति। सन्तः संतोषाणामैहिकामुष्मिकसुखानां यः पोषो वृद्धिस्तदर्थं वीणां तद्वादनमलयमनवरतं कलयन्तु सेवन्ताम्। कीदृशीम्? श्रुत्या स्मृत्या दृष्टाम्। अन्तर्भावितण्यर्थतया दर्शितामिति ज्ञेयम्। रुद्रेष्टां शंकरप्रीतिकारिणीम्। तथा नारदादिभिर्जुष्टां सेविताम्। आदिशब्देन सरस्वतीतुम्बुरुगणादयो गृह्यन्ते। वीणावादित्वं तेषाम् 'रुद्रस्य वीणानालम्बी महती नारदस्य च' (वैज० २-२०२) इत्याद्युक्तेः ॥ ७ ॥

एवं वीणाप्रशंसां निरूप्य प्रकृतोपयुक्तं तस्याः समुदितलक्षणमाह सप्तभिः। तत्र दण्डं लक्षयति—

सार्धैकादशमुष्टिर्दण्डः क्रियतेऽत्र तदुपरि च हित्वा।
अङ्गुलपञ्चकमेकं रन्ध्रं तिर्यक् चलच्छङ्कोः ॥ ८ ॥

सार्धेति। अत्र वीणायां दण्डः सार्धा एकादश मुष्टयो यस्य मानत्वेन स तादृशः क्रियते। षट्चत्वारिंशदङ्गुलः कार्य इत्यर्थः। क्रियत इति सर्वत्र संबध्यते। अत्र तु 'देशीसंसिद्धम्' इत्युपक्रम्य 'तिर्यग्यवोदरैः षड्भिर्निस्तुषैः स्यादिहाङ्गुलम्' (सं० ६-२७६,७) इति शार्ङ्गदेवोक्त्या तादृशमङ्गुलं ज्ञेयम्। 'तावच्च 'सुषिरं दधदन्तरा' (सं० ६-३०) षडङ्गुलोऽत्र परिधिः' (सं० ६-२७८) इत्यादिकया च तस्यैवोक्त्या दण्डस्यान्तः सुषिरत्वपरिधी च ज्ञेयौ।

'वैणवः खादिरो वापि रक्तचन्दनजोऽपि वा।
कांस्यजो वा भवेद्दण्ड ऋजुः श्लक्ष्णो व्रणोज्झितः ॥'

इति संगीतराजे कुम्भकर्णोक्त्याऽपि तादृशो दण्डो ज्ञेयः। कीलकरन्ध्रं लक्षयति—तदुपरि चेति। तदुपरि दण्डस्योर्ध्वेऽग्रभागेऽङ्गुलपञ्चकं हित्वा तावन्मानप्रदेशं त्यक्त्वा चलन्पुनः पुनर्भ्राम्यमाणो यः शङ्कुः खादिरादिरूर्ध्वतन्त्रीबन्धनकीलस्तत्संबन्धि, एकं तिर्यक् तिरश्चीनं रन्ध्रं क्रियते। तच्च 'रन्ध्रं चोभयतोमुखम्' (सं० ६-२८३) इति शार्ङ्गदेवोक्त्योभयतोमुखं ज्ञेयम् ॥ ८ ॥

ऊर्ध्वं तन्त्रीसुषिरवदपरं षष्ठेऽङ्गुले त्वचलशङ्कोः।
तिर्यङ्मात्रं तस्मान्मेढक ऊर्ध्वोऽङ्गुलात्परतः ॥ ९ ॥

ऊर्ध्वमिति। कीदृशं तत्? ऊर्ध्वं तन्त्रीसुषिरवत् उपरि तन्त्रीच्छिद्रयुक्तम्। तिर्यग्रन्ध्रस्याप्युपर्येकदेश ऊर्ध्वं तन्त्रीप्रवेशायापरमणु रन्ध्रं कार्यमित्यर्थः। अपरं तु द्वितीयं रन्ध्रं तु, अचलः स्थिरो यः शङ्कुश्चलशङ्कुदार्ढ्यायाकर्षकलोहकीलक-बन्धनाधारः, तत्संबन्धि षष्ठे ऽङ्गुले क्रियते। मध्ये पञ्चाङ्गुलानि परित्यज्य षष्ठे कार्यमित्यर्थः। कीदृशं तत्? तिर्यङ्मात्रं तिर्यगेव, न तु प्रथमरन्ध्रवदूर्ध्वं तन्त्रीच्छिद्रसंयुक्तमित्यर्थः। एतदप्युभयतोमुखं ज्ञेयम्। द्वे अपि रन्ध्रे कनिष्ठा-ग्रस्थौल्ये च ज्ञेये। कीलौ षडङ्गुलदैर्घ्यौ पृथुलशिरसौ। तत्र चलस्तु गले बहुच्छिद्रो मुनिवचनाज्ज्ञेयः। एवं कीलावपि लक्षितौ। मेरुं लक्षयति—तस्मादिति। तस्मात्स्थिरशङ्कुच्छिद्रात्, अङ्गुलात्परत ऊर्ध्वो मेढक ऊर्ध्व-तन्त्रिकाधारो मेर्वाख्यः क्रियते। तच्छिद्रादङ्गुलमतिक्रम्यानुमानेन दण्डपृष्ठ-मध्य उच्चो मेरुः स्थाप्य इत्यर्थः। अत्र करोतिः 'कुरु करे गुरुमेकमयोघनम्' (नैष० ४-९९) इतिवत्स्थापनार्थः। स च वक्ष्यमाणककुभलक्षणानुसारेण दण्डाद्यवन्यूनद्व्यङ्गुलोच्चश्चतुरङ्गुलविपुलश्च ज्ञेयः॥ ९॥

तुम्बे लक्षयति—

तुम्बं तदधो ऽङ्गुलतो ऽष्टाविंशत्यङ्गुलान्तरेणान्यत्।
नाभिद्वयं सुवृत्तं सच्छिद्रं त्र्यङ्गुलोच्चततम्॥ १०॥

तुम्बमिति। तदधो मेरोरधोभागे, अङ्गुलतः, परमिति शेषः। तुम्ब-मलाबूफलम, प्रथममिति शेषः, क्रियते। अनुमितान्मेर्वधोभागादङ्गुलमतिक्रम्यैकं तुम्बं स्थापनीयमित्यर्थः। तद्बन्धनक्रिया त्वग्रे वक्ष्यते। अन्यद्द्वितीयं तुम्बमष्टा-विंशत्यङ्गुलान्तरेण क्रियते। अष्टाविंशत्यङ्गुलान्यतिक्रम्यैकोनत्रिंशत्तमे ऽङ्गुले स्थाप्यत इत्यर्थः। नाभी लक्षयति—नाभिद्वयमिति। नाभी तुम्बवृन्तभागस्थे दण्डश्लिष्टे काष्ठादिनिर्मितचक्रिके, तयोर्द्वयं सुवृत्तमतिवर्तुलं सच्छिद्रं मध्य ऊर्ध्वाधो-मुखरन्ध्रयुक्तं त्र्यङ्गुलमुच्चमुच्छ्रितं च ततं विस्तीर्णं च, तादृशं क्रियते। ते चाधोभागान्तर्गतगर्ते मध्यकुशे ऊर्ध्वभागान्तर्गतपूर्वपश्चिममुखगर्ते च ज्ञेये॥१०॥

ककुभं लक्षयति—

ककुभो द्व्यङ्गुलमुच्चश्चतुरङ्गुलदीर्घविपुलमसृणशिराः।
वीणादण्डान्तर्गतदण्डो ऽधःपक्ष उत्कीलः॥ ११॥

ककुभ इति। ककुभो दण्डाधोभागाग्रगतं तन्त्रीबन्धनाधारभूतं काष्ठशकलम्, एवं क्रियते। कीदृक्? द्व्यङ्गुलमुच्चः, वीणादण्डादङ्गुलद्वयमुच्छ्रितः। तथा चतुरङ्गुलं दीर्घं लम्बं च तद्विपुलं विस्तृतं च तादृशं मसृणं श्लक्ष्णं शिर उपरिभागो यस्य सः। तथा वीणादण्डान्तर्गतो वीणादण्डस्य मध्ये प्रविष्टो दण्डो यस्य सः। सोऽस्य दण्डः पञ्चाङ्गुलश्चतुरङ्गुलो वा ज्ञेयः। तथा, अधो दण्डानुसारिणोः पार्श्वभागयोः पक्षौ पक्षिपक्षाकारावुन्नतावयवौ यस्य सः। तथा, उदुद्गताः कीलास्तन्त्रीणां बन्धनाधारभूता ह्रस्वलोहशङ्कवो यस्मिन्सः ॥ ११ ॥

तथा मेरोर्मेढकात्किंचिद्यवमात्रमुच्चः ; कस्मिन्प्रदेश उच्चः? इत्यत्राह—

**मेरोरुच्चः किंचित्स्वदक्षिणतुरीयतन्त्रिकास्थाने।**
**उच्चोच्चान्यत्रिपदः सचतुरयःपत्रमूर्धांशः ॥ १२ ॥**
**दृढवेणुजाणुजीवो ऽथ सारिका मेरुककुभवद्विपुलाः।**
**एकादशाङ्गुला लघुसारीदशकक्षमा पट्टी ॥ १३ ॥**
**तुम्बाग्रमनुगताग्रा**

स्वदक्षिणेति। स्वस्य वादकस्य दक्षिणं दक्षिणहस्तगं यत्तुरीयतन्त्रिकाया ऊर्ध्वस्थचतुर्थतन्त्र्याः स्थानं पदं तत्रोच्चः। तथा, उच्चादुच्चान्युच्चोच्चान्यन्यानि त्रीणि पदानि यस्य सः। तत्र चतुर्थतन्त्रीपदापेक्षया तृतीयतन्त्रीपदं किंचिदुच्चम्; ततो द्वितीयतन्त्रीपदं किंचिदुच्चम्; ततोऽपि प्रथमतन्त्रीपदं किंचिदुच्चमित्यर्थः। तथा चतुर्भिरयःपत्रैर्लोहपत्रिकाभिः सहितः सचतुरयःपत्रः, तादृशो मूर्धांश उपरिभागो यस्य सः। लोहपत्राणि च लाक्षासंश्लिष्टानि मध्ये कूर्मपृष्ठोन्नतानि ककुभोच्चत्वान्तर्गतानि च ज्ञेयानि। एवं पत्रिका अपि लक्षिताः; तथा दृढवेणुजाः पक्ववंशत्वगुद्भवा अणवोऽल्पीयस्यो जीवास्तन्त्रीपत्रिकयोरन्तर्गतास्तयोः संश्लेषे संदेहकारिण्यो नादातिशयहेतवः कलाख्या यस्मिन्सः। एवं जीवा अपि लक्षिताः। सारिका लक्षयति—अथ सारिका इति। सारिका लोहादिनलिकाः;

‘गृध्रवक्षोऽस्थिनलिका यद्वा तच्चरणास्थिजाः।
आयस्यः कांस्यमय्यो वा नलिकाः सारिकाभिधाः॥’ (स० ६-२९९)

इति निःशङ्कोक्तेः। उपचारात्तु तदाधारभूताः काष्ठादिनिर्मितपट्टिका दण्ड-पृष्ठस्थिता लोके उच्यन्ते। 'सारी' इति भाषायाम्। ता मेरुककुभवद्विपुलाः क्रियन्ते। मेरुककुभाभ्यां विस्तारे समा इत्यर्थः। ताश्च यथा तन्त्रीं न स्पृशन्ति, तथा दग्धवस्त्रमिश्रितेन सिक्थकेन दण्डे श्लेष्या इति ज्ञेयम्। पट्टिकां लक्षयति—एकादशेति। पट्टी शाकादिकाष्ठनिर्मिता दण्डपृष्ठस्थिता पट्टिकैकादशाङ्गुला क्रियते। कीदृशी? लघूनां पूर्वापेक्षया ह्रस्वानां सारीणां यो दश परिमाणमस्येति दशकः, तस्य क्षमा योग्या। दश लघुसारिका यस्यां स्थाप्यन्त इत्यर्थः। दशक इति 'संख्यायाः संज्ञासंघ—' (५-१९८) इति कन्। पुनः कीदृशी पट्टी? तुम्बाग्रमनु द्वितीयतुम्बवृन्तभागं लक्षीकृत्य गताग्रा, दण्डपृष्ठे ऽनुमानेन स्थापितद्वितीयप्रान्ते-त्यर्थः। यथा तुम्बं नोल्लङ्घयेत्तथा दीर्घसारीसंनिधौ स्थापितेति यावत्॥१२,१३-॥

दोरकाल्लँक्षयति—

बन्धार्थं दोरका दृढास्त्रिगुणाः।
तुम्बादिबन्धनादि तु लोकात्स्याद्द्रुवीणेति॥ १४॥

बन्धार्थमिति। दोरकाः कार्पाससूत्रेण पट्टसूत्रेण वा निर्मिता रज्जवः, त्रिगुणास्त्रिवृताः क्रियन्ते दृढाः सार्धहस्तमिताश्च ज्ञेयाः। अवशिष्टं लक्षयति—तुम्बादीति। तुम्बादिबन्धनं तुम्बनाभितन्त्रीबन्धनमादिर्यस्य कर्मणस्तत्तु लोका-त्क्रियते। तुम्बबन्धनं यथा—द्विगुणां दृढां स्नायुमयीं तन्त्रीं लघुलोहकीलेन सह दण्डाधःस्थरन्ध्रे प्रवेश्यावष्टभ्य च, ततस्तां दण्डाधःश्लिष्टनाभ्याश्छिद्रे तुम्बाग्र-च्छिद्रे च प्रोतां तुम्बान्तर्गतवेणुशकलादौ निबध्य युक्त्या यावद्दृढबन्धं तुम्बं भ्रामयेदिति बन्धनदिक्। तन्त्रीबन्धनं च यथा—ककुभकीलनिबद्धैकप्रान्ताया-स्तन्त्र्या अपरप्रान्तं दोरकाग्रे निबध्य दोरकतन्त्रीसंधिं रज्ज्वन्तरेणाकृष्य दोरकेण तन्त्रीसहितं दण्डपृष्ठं त्रिश्चतुर्वा अग्रे ऽग्रे संवेष्ट्य ततो दोरकप्रान्तं तन्त्र्या अधो-भागेन वेष्टनानामुपरि नीत्वा आकर्षणरज्जुकृतच्छिद्रेण प्रवेश्य दोरकं यावद्दृढ-बन्धमाकृष्य वेष्टनं यथायथमाकर्षयेत्। उपरितनचतुर्थतन्त्रीबन्धने तु तस्या एकप्रान्तं ककुभकीले निबध्य द्वितीयं प्रान्तं चलशङ्कुच्छिद्रोर्ध्वगतरन्ध्रेण दण्डान्तर्गतचलशङ्कोर्मध्यरन्ध्रे युक्त्या प्रवेश्य ग्रथयित्वा चलशङ्कुं तन्त्रीदार्ढ्यं

यावद्भ्रामयेत् । ततः स्थिरशङ्कुं निबद्धवक्रलोहकीलाग्रं चलशङ्कोर्गलच्छिद्रेष्वन्यतमरन्ध्रे ऽवष्टम्भयेत् । तेन चलशङ्कोः स्थैर्यं भवति । एवं लोकत एव कीललक्षणं तन्त्रीसंधानादि च ज्ञेयम् । एवं लक्षितां रुद्रवीणां निगमयति—स्याद्रुद्रवीणेति । क्रियत इति सर्वत्र संवन्धः । क्रियादीपकमलंकारः ॥ -१४ ॥

एवं सामान्येन रुद्रवीणां लक्षयित्वा तद्विशेषान्वक्तुं प्रतिजानीते ; उक्तात्रेति सपादयार्यया—

उक्तात्र शुद्धमेलाथ मध्यमेलेति सा द्विधा सापि ।
पुनरेकैकं द्विविधा तत्राखिलरागमेलैका ॥ १५ ॥
अपरैकरागमेला तत्राद्या भेदयोरवान्तरयोः ।
स्थानत्रये ऽपि यत्राखिलरागार्हस्वराः सार्यः ॥ १६ ॥

उक्तेति । अत्रास्मिन्प्रकरणे सा रुद्रवीणा शुद्धमेला मध्यमेला चेति द्विविधोक्ता । अथेति चार्थे । सापि द्विविधापि पुनरेकैकं प्रत्येकं द्विविधा । तत्र तयोरवान्तरभेदयोर्मध्ये, एकाखिलरागमेला, अखिलरागः सर्वरागसंबन्धी मेलो यस्यामित्यर्थः । अपरैकरागमेला, एकरागो विशिष्टरागसंबन्धी मेलो यस्यामित्यर्थः । शुद्धमेलाखिलरागमेलेत्येकः, शुद्धमेलैकरागमेलेति द्वितीयः, मध्यमेलाखिलरागमेलेति तृतीयः, मध्यमेलैकरागमेलेति चतुर्थो भेदः । तत्र यथोद्देशं लक्षणं कर्तव्यमिति न्यायाद्यपि शुद्धमेलामध्यमेले प्रथमं लक्ष्ये, तथाप्यवान्तरभेदावल्पवक्तव्यत्वात्सूचीकटाहन्यायेन प्रथमं लक्षयति—तत्र,येति । तत्र तयोरवान्तरयोर्भेदयोरुपभेदयोर्मध्ये, आद्याखिलरागमेला, सेत्यर्थात् । सा का? यत्र यस्यां वीणायां स्थानत्रयेऽपि मन्द्रमध्यतारस्थानेष्वपि, अखिलरागार्हाः सर्वरागप्रकाशनयोग्याः स्वराः शुद्धा विकृताश्च षड्जादयो याभ्यस्तादृश्यः सार्यः, भवन्तीति शेषः । यत्र पूर्वमेव स्थापिताखिलसारीकत्वात्सारीचालनं विना सर्वरागोत्पत्तिः साखिलरागमेलेत्यर्थः । 'वज्रथाट' इति भाषायाम् ॥ १५, १६ ॥

सान्या यत्र यथार्हं रागव्यक्त्यै मुहुश्चलन्तीमाः ।
अथ शुद्धमेलवीणेह लक्ष्यमनु लक्ष्यते प्रथमा ॥ १७ ॥

सेति। सान्या द्वितीयैकरागमेला। सा का? यत्रेमाः सार्यो रागव्यक्त्यै प्रतिनियतरागप्रकाशनार्थं मुहुश्चलन्ति; तत्तत्स्थानादुद्धृत्य स्थानान्तरे स्थाप्यन्त इत्यर्थः। किं स्थानत्रये ऽपि? नेत्याह—यथार्हं यथायोग्यम्। तेन शुद्धमेलायां मध्यतारस्थानयोरेव सारीचालनम्, मन्द्रस्थाने त्वधिकसारीस्थापनया तच्चालनं नैव। मध्यमेलायां तु मध्यस्थाने धैवतनिषादयोरेव सारीचालनम्, तारस्थाने तु सर्वत्रापि। सर्वस्मिन्मन्द्रस्थान आपञ्चमं च मध्यस्थाने ऽधिकसारीस्थापनया तच्चालनं नैव। अतः परं शुद्धमेलां लक्षयितुं प्रतिजानीते—अथ शुद्धेति। प्रथमा पूर्वोद्दिष्टा मुख्या वा शुद्धमेलवीणा, इह लक्ष्यमनु वीणाया लोकस्थितिमनुसृत्य लक्ष्यते,

'यद्वा लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वते' (सं० ६-३३३)

इति शार्ङ्गदेवोक्तेः ॥ १७ ॥

तल्लक्षणमेव सोपपत्तिकमाह; स्थाप्या मेरोरित्याद्यार्याभिः षड्विंशति-संख्याभिः—

स्थाप्या मेरोरूर्ध्वं चतस्र इह तन्त्रिका मिथो विषमाः।
दक्षिणपार्श्वे दाण्डे तिस्रश्चतसृषु च वामाद्या ॥ १८ ॥

स्थाप्येति। इहास्यां शुद्धमेलायां मेरोरूर्ध्वं चतस्रस्तन्त्रिकाः स्थाप्याः, त्रिभिर्दोरकैः कीलद्वयेन च पूर्वोक्तरीत्या बन्धनीयाः। अत्र मेरुस्थैर्यं लाक्षया दण्डपृष्ठान्तर्गताधःस्थकीलेन वा लोकतो ज्ञेयम्। कीदृश्यस्ताः? मिथः परस्परं विषमा विसदृश्यः। तत्र प्रथमा लोहमयी तन्त्री गजकेशतः किंचित्स्थूला, द्वितीया ततः कृशा, तृतीया कृशतरा, चतुर्थी कृशतमेत्यर्थः। च परं दाण्डे दण्डसंबन्धिनि दक्षिणपार्श्वे तिस्रस्तन्त्रिकाः स्थाप्या इति चात्रानुषज्यते। दोरकत्रितयेनान्यदपि तन्त्रीत्रयं दण्डमध्यभागमनुसृत्य सार्यवकाशप्रदेशे पूर्ववद्बन्धनीयमित्यर्थः। एता अपि तिस्र उपरितनादिक्रमेण पूर्ववन्मिथो विषमा ज्ञेयाः। एवं तन्त्रीसप्तकस्थापनं निरूप्य मेरोरुपरिस्थासु तासु स्वरस्थापनं तावदाह—चतसृष्विति। चतसृषु मध्ये वामा आद्या, तन्त्रीत्यप्रतोऽप-कृष्यते। स्कन्धस्थायां वीणायां वादकस्य वामहस्तगा तन्त्रीः प्रथमेत्यर्थः ॥१८॥

अनुमन्द्रषड्जमर्हेदनुमन्द्रे पं द्वितीयका तन्त्रीः ।
मन्द्रं सं च तृतीया चतुर्थिका मध्यमं मन्द्रम् ॥ १९ ॥

अनुमन्द्रषड्जमर्हेदिति । अनु हीनो मन्द्रो ऽनुमन्द्रः, मन्द्रान्नीच इति यावत् । स चासौ षडजः । यद्वा, अनुमन्द्रे मन्द्रस्य पश्चाद्भागे यः षड्जः, यस्माद्द्विगुणो मन्द्रषड्ज इति यावत् । तमर्हेत् प्राप्तुं योग्यः स्यात् । अर्हेदित्यार्याद्वये ऽपि संबध्यते । रञ्जकः सन्ननुरणनात्मको ध्वनिविशेषो यस्मात्पूर्वमन्यो न संभवति तादृग्लक्षणो ऽनुमन्द्रषड्जो यथोदियात्तथा प्रथमतन्त्रीः शिथिलं बन्धनीयेत्यर्थः । द्वितीयका च तन्त्रीः, अनुमन्द्रे, वर्तमानमिति शेषः; पं पञ्चममर्हेत् । अनुमन्द्रषड्जापेक्षया प्रथमविवेकोक्ताभ्यो ऽनुमन्द्रश्रुतिभ्यो द्वादशभ्यः परस्त्रयोदशो ऽनुमन्द्रपञ्चमाख्यो ध्वनिभेदो यथोदियात्तथा द्वितीयतन्त्रीः प्रथमायाः किंचिद्दृढं बन्धनीयेत्यर्थः । तृतीया च तन्त्रीर्मन्द्रं सं षड्जम्, अनुमन्द्रषड्जाद्द्विगुणमिति यावत्; अर्हेत् । मन्द्रषड्जो यथोदियात्तथा सा द्वितीयस्या अपि किंचिद् दृढं बन्धनीयेत्यर्थः । चतुर्थिका मन्द्रं मध्यममर्हेत् । मन्द्रषड्जापेक्षयाष्टाभ्यः श्रुतिभ्यः परो नवमो मन्द्रमध्यमाख्यो ध्वनिभेदो यथोदियात्तथा तृतीयस्या अपि-किंचिद्दृढा चलकीलभ्रमणेन कार्येत्यर्थः । अनुमन्द्रषड्जमिति 'विशेषणं विशेष्येण—' (२-१-५७) इति तत्पुरुषगर्भस्तत्पुरुषः; यद्वा—अव्ययीभावगर्भः सप्तमीतत्पुरुषः । अनुमन्द्र इति पश्चादर्थे 'अव्ययं विभक्ति—' (२-१-६) इत्यादिना-ऽव्ययीभावः । 'तृतीयासप्तम्योः—' (२-४-८४) इति पक्षे ऽमभावश्च ॥१९॥

दण्डपार्श्वस्थतन्त्रीष्वपि स्वरस्थापनमाह—

पार्श्वे तूपरिगाद्या मन्द्रं सं मध्यमा च मन्द्रं पम् ।
अन्त्या मध्यं षड्जं श्रुत्याख्यास्तिस्र एताः स्युः ॥ २० ॥
सति वा षड्जे श्रुतयो मन्द्रे मध्ये क्रमात्सकृद्द्विश्च ।
यद्वा षड्जे मन्द्रे मध्ये तारे तथा ताः स्युः ॥ २१ ॥

पार्श्वे त्विति । पार्श्वे दण्डपार्श्वे तु, उपरिगोपरि स्थिता सती, आद्या प्रथमा तन्त्री मन्द्रं सं षड्जमर्हेत् ; मेरुस्थतृतीयतन्त्र्या समध्वनिः कार्येत्यर्थः ।

मध्यमा च तन्त्रीर्मन्द्रं पं पञ्चममर्हेत् ; मेरुस्थद्वितीयतन्त्रीध्वनिना द्विगुणसमानध्वनिः कार्येत्यर्थः । अन्त्या मध्यं षड्जमर्हेत ; दण्डपार्श्वस्थप्रथमतन्त्रीध्वनिना द्विगुणसमानध्वनिः कार्येत्यर्थः । एतत्तन्त्रीत्रयस्य प्रत्येकं लौकिकीं संज्ञामाह—श्रुत्याख्या इति । तिस्र एता दण्डपार्श्वगास्तन्त्र्यः श्रुत्याख्याः स्युः, श्रुतिसंज्ञया लोके व्यवह्रियन्त इत्यर्थः ॥ प्रकारान्तराभ्यां तास्वेव स्वरस्थापनमाह—सतिवेति । वाथ वा, मन्द्रे षड्जे सकृदेकवारं मध्ये च षड्जे द्विर्द्विवारं सति श्रुतयः क्रमात्स्युः । उपरितनश्रुतौ मन्द्रषड्जः, मध्यमायामधस्तन्यां च मध्यषड्ज इत्यार्थः । यद्वा, मन्द्रे मध्ये तारे च षड्जे क्रमादुपरितनादिक्रमेण सति ताः श्रुतयः स्युः । तारो ऽत्र मध्याद्द्विगुणत्वाद्ध्रस्वतमतन्त्र्यां बोद्धव्यः । क्रमात्स्युरिति चोभयत्र संबध्यते । तथेति चार्थे ॥ २०, २१ ॥

पूर्वं मेरुस्थे तन्त्रीचतुष्टये षड्जपञ्चमषड्जमध्यमेति क्रमेण स्वरस्थापनमुक्तम् ; इदानीं तस्मिन्नेव तन्त्रीचतुष्टये ऽधः सारिकाषट्कस्थापनहेतुकमवशिष्टस्वरस्थापनं वदन्प्रथमतन्त्र्यां षट्सारीस्थापनेनानुमन्द्रे षट् स्वरानाह—

अनुमन्द्रषड्जतन्त्र्यां षट् सारीः स्थापयेद्यथा स्युरिमे ।
शुद्धरिशुद्धगसाधारणमृदुमशुचिममृदुपसंज्ञाः ॥ २२ ॥

अनुमन्द्रेति । अनुमन्द्रषड्जस्य या तन्त्रीस्तस्यामिमे षट् स्वरा यथा स्युः स्वस्वश्रुतिस्थतया प्रकाशेरंस्तथा षट् सारीः स्थापयेत् । इमे के ? तानाह—शुद्धरीति । तत्रानुमन्द्रषड्जात्परस्यामनुमितायां तृतीयश्रुतौ यथा शुद्धरिः स्यात्तथा प्रथमसारी स्थाप्येत्यर्थः । तस्माच्छुद्धर्षभाद्द्वितीयश्रुतौ यथा शुद्धगः स्यात्तथा द्वितीयसारी ; तस्माच्छुद्धगान्धारान्मध्यमस्य प्रथमायां श्रुतौ यथा साधारणः स्यात्तथा तृतीयसारी ; तस्मान्मध्यमप्रथमश्रुतिस्थगान्धारात्तु द्वितीयश्रुतौ यथा मृदुमः स्यात्तथा चतुर्थसारी ; तस्मान्मध्यमोपान्त्यश्रुतिस्थगान्धारात्प्रथमश्रुतौ यथाशुचिमः स्यात्तथा पञ्चमसारी ; तथा तस्मादेव शुद्धमध्यमात्तृतीयश्रुतौ यथा मृदुपसंज्ञो मध्यमः स्यात्तथा षष्ठसारी च स्थाप्येत्यर्थः । शुद्धर्यादयः संज्ञा येषामिति बहुव्रीहिर्वा । एते षडनुमन्द्रा एव ज्ञेयाः ॥ २२ ॥

तत्रैव सारीषट्के द्वितीयतन्त्र्यां क्रमेण स्वराविर्भावमाह—

अनुमन्द्रपस्य तन्त्र्यां स्युरिमे तास्वेव षट्सु सारीषु ।
शुद्धधशुद्धनिकैशिकिमृदुसशुद्धऋषभाख्याः ॥ २३ ॥
शुद्धौ सरी इमौ न ग्राह्यौ तन्त्र्या तृतीयया जननात् ।
अनुमन्द्रसतन्त्रीवन्मन्द्रसतन्त्र्यां स्वरास्तेषु ॥ २४ ॥
त्याज्यौ शुद्धमसृदुपाविमौ चतुर्थ्यां समुद्भवाद्भूयः ।
मन्द्रमतन्त्र्यां त्वित्थं सारीषु स्युः स्वरास्तासु ॥ २५ ॥

अनुमन्द्रपस्येति । शुद्धधादयः शुद्धऋषभान्ता आख्या येषां ते तथोक्ताः । तत्र स्वतृतीयश्रुतिस्थः शुद्धधः शुद्धधैवतः प्रथमसार्यामुदियात् । द्वितीयश्रुतिस्थः शुद्धनिः शुद्धनिषादो द्वितीयसार्याम्; कैशिकी षड्जप्रथमश्रुतिस्थो निषादस्तृतीयसार्याम्; मृदुसः षड्जोपान्त्यश्रुतिस्थो निषादश्चतुर्थ्याम्; शुचिसः शुद्धषड्जः पञ्चमसार्याम्; शुद्धऋषभः स्वतृतीयश्रुतिस्थः षष्ठसार्यां चोदियादित्यर्थः । शिष्टं स्पष्टम् । तत्र शुद्धधशुद्धनिकैशिकिमृदुसा अनुमन्द्रे ज्ञेयाः । शुचिसशुद्धऋषभौ तु मन्द्रे । शुद्धधादय आख्याः संज्ञा येषामिति बहुव्रीहिर्वा ॥ तत्रान्तिमौ द्वौ मन्द्रौ प्रयोगे न वादनीयावित्याह—शुद्धौ सरी इति । इमौ द्वितीयतन्त्रीस्थौ शुद्धौ सरी न ग्राह्यौ । कुतः? तृतीयया तन्त्र्या करणेन जननात्; पुनरपीति शेषः । तन्त्र्यां तृतीयायां मन्द्रौ शुद्धषड्जऋषभौ पुनरप्युदित इति तावेव वादनीयौ, न तु पूर्वौ मन्द्रध्वनित्वादित्यर्थः । प्रथमतन्त्रीवत्तृतीयतन्त्र्यां तास्वेव सारीषु शुद्धरिशुद्धगसाधारणमृदुमशुद्धममृदुपाः क्रमेण ज्ञेया इत्याह—अनुमन्द्रसतन्त्रीवन्मन्द्रसतन्त्र्यां स्वरा इति । स्पष्टम् । किं तु तन्त्रीभवाः शुद्धऋषभादयो ऽनुमन्द्रे । एते तु शुद्धऋषभादयो मन्द्र इति विशेषः । एष्वपि षट्स्वन्तिमौ द्वौ प्रयोगे त्याज्यावित्याह—तेष्विति । तेषु शुद्धऋषभादिष्विमौ मन्द्रौ शुद्धममृदुपौ त्याज्यौ । कुतः? चतुर्थ्यां भूयः समुद्भवात् । मन्द्रमतन्त्र्यां पुनरपि शुद्धमध्यममृदुपञ्चमयोर्मन्द्रयोरुत्पत्तेरित्यर्थः । चतुर्थतन्त्र्यां तस्मिन्नेव सारीषट्स्वराविर्भवनमाह—मन्द्रमतन्त्र्यां त्विति । अस्यां तु तासु सारीषु, इत्थमनेन प्रकारेण स्वराःस्युः ॥ २३–२५ ॥

तमेव प्रकारमाह—

आद्याद्वितीययोः स्तो मृदुपोज्ज्वलपौ तृतीयकां त्यक्त्वा ।
तुर्यायां शुद्धो धः शुद्धो निः स्याच्च पञ्चम्याम् ॥ २६ ॥
षष्ठ्यां तु मृदुः षड्जः कैशिक्यर्थं परान्तरा सारी ।
मेरौ च प्रतिसारि स्वरस्थितिरियं प्रमाणं हि ॥ २७ ॥

**आद्याद्वितीययोरिति** । आद्याद्वितीययोर्मृदुपोज्ज्वलपौ मृदुपञ्चमशुद्धपञ्चमौ स्तः । तत्र प्रथमसार्यां मृदुपः, द्वितीयसार्यां शुद्धपञ्चम इत्यर्थः । तृतीयकां तृतीयसारीं त्यक्त्वा तुर्यायां चतुर्थ्यां शुद्धो धः शुद्धधैवतः । स्यादिति सर्वत्र संबध्यते । तृतीयायां तु न कोऽपीत्यर्थः । पञ्चम्यां तु शुद्धो निः शुद्धनिषादश्च स्यात् । षष्ठ्यां षष्ठसार्यां च मृदुः षड्जः स्यात् । कैशिकिनः सारीमाह—**कैशिक्यर्थमिति** । कैशिकिनः प्रादुर्भावाय, अन्तरा निषादमृदुषड्जसार्योर्मध्ये परा अन्या सारी स्यात् । सा तु निषादसार्या समीपे स्थाप्येत्यर्थः । एवं च सप्त सार्यो भवन्ति । ननु प्राचीनैरेवं साक्षादनुपदिष्टत्वादेतादृश्येव स्वरस्थितिरिति कुत इत्याशङ्क्याह—**मेरौ चेति** । मेरौ मेढके प्रतिसारि सार्यां सार्यां च, इयं तन्त्रीचतुष्टये सपसमरिधरिमृदुपादिरूपा स्वरस्थितिः स्वरस्थापनं प्रमाणं युक्ता ; मान्येति यावत् । हिरेवार्थे । प्रमाणमित्यजहल्लिङ्गं स्त्रीविशेषणम् । स्थितिरित्यन्तर्भावितण्यर्थस्तिष्ठतिः ॥ २६, २७ ॥

तत्र हेतुमाह—

संवादिनां समाजो रञ्जनकारी भवेदिति न्यायात् ।
ध्वनितं निःशङ्कादिभिरिहापि संवादिसांनिध्यम् ॥ २८ ॥
सपसममुख्याः संवादिनः स्वरा एकसंश्रयाः प्रायः ।
श्रुतयो द्वादश वाष्टौ तेषामन्तर्यतः सन्ति ॥ २९ ॥

**संवादिनामिति** । संवाद एककार्यत्वं येषामस्ति तादृशानां समाजः समूहः, सहावस्थितिरिति यावत् ; रञ्जनकारी रञ्जको भवेदिति न्यायाल्लोकप्रथातः ।

शास्त्रेऽपि प्राचीनानुमतिमत्राह—ध्वनितमिति। निःशङ्कादिभिः शार्ङ्गदेवप्रमुखैरपि, इह शास्त्रे संवादिनोः स्वरयोर्यत्सांनिध्यं राजामात्यवत्कार्यसिद्धये सहावस्थानं तद् ध्वनितं सूचितम्। तथा च शार्ङ्गदेवः—

'. . . . . . . . वादी राजत्र गीयते।
संवादी त्वनुसारित्वादस्यामात्योऽभिधीयते॥' (सं १-३-५०) इति।

शास्त्रीयं परस्परसंवादित्वमेवास्यां स्वरस्थापनायामिति सहेतुकमाह—सपसमप्रमुख्या इति। एकः संश्रय आधारो मेरुः सारिका वा येषां ते सपसमप्रमुख्याः सपसमरिधरिमृदुपादयः प्रायो बाहुल्येन संवादिनः। संवादित्वे हेतुमाह—श्रुतय इति। द्वादशाष्टौ वा श्रुतयस्तेषां सपसमादीनामन्तर्मध्ये सन्ति यतः। तथा च निःशङ्कः—

'श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः।
मिथः संवादिनौ तौ स्तः . . . . . . . . (सं १-३-२८,२९) इति।

यद्यपि द्वयोर्द्वयोरेव मध्ये श्रुतिविचारस्तथापि तेषामिति बहुत्वमनेकयुग्मापेक्षया। प्रायःपदेन क्वचिदेव संवादित्वं नेति सूचितम्। तत्र तन्त्रीचतुष्टयेन मेरावुदितेषु सपसमेषु मध्येऽनुमन्द्रसानुमन्द्रपयोरनुमन्द्रपमन्द्रसयोर्मन्द्रसमन्द्रमयोश्च संवादित्वम्। प्रथमसार्यां रिधरिमृदुपेषु मध्येऽनुमन्द्रऋषभानुमन्द्रधयोरनुमन्द्रधमन्द्रऋषभयोर्मन्द्रऋषभमन्द्रमृदुपयोश्च संवादित्वम्। द्वितीयसार्यां गनिगपेषु मध्येऽनुमन्द्रगानुमन्द्रनिषादयोरनुमन्द्रनिषादमन्द्रगयोश्च संवादित्वम्। पस्य तु गेन नास्ति। तृतीयसार्यां साधारणकैशिकिसाधारणेषु मध्येऽनुमन्द्रसाधारणानुमन्द्रकैशिकिनोरनुमन्द्रकैशिकिमन्द्रसाधारणयोश्च संवादित्वम्। अत्र चतुर्थ एव नास्ति। चतुर्थसार्यां मृदुममृदुसमृदुमधैवतेषु मध्येऽनुमन्द्रमृदुमानुमन्द्रमृदुसयोरनुमन्द्रमृदुसमन्द्रमृदुपयोश्च संवादित्वम्। धस्यापि नास्ति। पञ्चमसार्यां मसमनिषु मध्येऽनुमन्द्रममन्द्रसयोर्मन्द्रसमन्द्रमयोर्मन्द्रममन्द्रन्योश्च संवादित्वम्। षष्ठसार्यां मन्द्रः कैशिक्येव। सप्तमसार्यां मृदुपऋषभमृदुपमृदुसेषु मध्येऽनुमन्द्रमृदुपमन्द्रऋषभयोर्मन्द्ररिमन्द्रमृदुपयोर्मन्द्रमृदुपमन्द्रमृदुसयोश्च संवादित्वम्॥ २८,२९॥

एवं संवादित्वेन तादृक्स्थापनाया प्रामाण्यमुक्त्वा तत्तन्निजश्रुतिमानेन स्थापितानामपि सपसमानां तावत्स्वयंभूत्वेनापि प्रामाण्यमाह—

**किं च स्वभुवः सपमा नियतश्रुतयोऽपि कल्पिता नो तु ।**
**वच्मि स्फुटमिह हेतुं सारीतन्त्र्योर्विना श्लेषम् ॥ ३० ॥**
**अपरस्तुरीयतन्त्र्यां द्वितीयसार्यूर्ध्वमणुरवोऽस्ति समः ।**
**तन्मन्द्रपः स्वयंभूर्मध्ये च समध्यमौ स्वभुवौ ॥ ३१ ॥**

किंचेति । नियताः शास्त्र एतावत्तया कल्पिताः श्रुतयो येषां तादृशा अपि सपमाः षड्जपञ्चममध्यमाः स्वस्मादेव भवन्तीति स्वभुवः स्वप्रकाशाः ; नो तु कल्पिताः । स्वयंभूत्वे स्पष्टं हेतुं वक्तुं प्रतिजानीते—वच्मि स्फुटमिह हेतुमिति । स्पष्टम् । हेतुमेव प्रकटयति—सारीतन्त्र्योरिति । तुरीयतन्त्र्यां मन्द्रमध्यमतन्त्र्यां द्वितीयसार्यूर्ध्वं मन्द्रपञ्चमप्रकाशिकायाः सार्या उपरि सारीतन्त्र्योः श्लेषं संघट्टनं विनापरो द्वितीयः, समस्तेनैव मन्द्रपञ्चमेन तुल्यः, अणुरवः सूक्ष्मो ध्वनिरस्ति ; यथा द्वितीयसार्यां तन्त्रीसंघट्टनेन, मन्द्रपञ्चम उदेति तथा तस्या उपर्यसंलग्नायामपि तन्त्र्यां वामकराङ्गुलिस्पर्शनमात्रेणाप्यन्यो मन्द्रपञ्चमः सूक्ष्मः श्रूयत इत्यर्थः । तत्ततो हेतोर्मन्द्रपो मन्द्रपञ्चमः स्वयंभूः । च परं मध्ये समध्यमौ मध्यस्थानस्थषड्जो मध्यस्थानस्थमध्यमश्च स्वभुवौ स्वयंभुवौ स्वप्रकाशौ ॥ ३१ ॥

हेतुमाह—

**अष्टम्येकादश्योः सार्योरूर्ध्वे समापरध्वनितः ।**
**तत्तैः समाः सपसमाः स्वयंभुवो मुक्ततन्त्रीजाः ॥ ३२ ॥**

अष्टम्येकादश्योरिति । एतयोः सार्योरूर्ध्वं समौ यावपरौ ध्वनी ततः । मृदुषड्जापेक्षयैकश्रुतिमानेन स्थापिताया अष्टमसार्या उपरि तस्यामेव तन्त्र्यां तत्सारीश्लेषं विनापि पूर्ववन्मध्यषड्जान्तरं स्पष्टमेव श्रूयते । तथा तत्षड्जादुपरि तृतीयश्रुतिमानेन नवमी ऋषभसारी, ततोऽपि द्वितीयश्रुतिमानेन दशमी गान्धारसारी, ततोऽपि चतुर्थश्रुतिमानेनैकादशी मध्यमसारी, तस्या उपरि चतुर्थतन्त्र्यामेव तत्सारीश्लेषं विनापि पूर्ववन्मध्ये मध्यमान्तरं च श्रूयते,

तस्माद्धेतोरिमौ च स्वयंभुवावित्यर्थः। एकादशसारीस्थो मध्यमस्त्वेकरागमेल-वीणायां सुबोधायोक्तः। अखिलरागमेलवीणायां तु त्रयोदशसारीस्थो मध्यमो भवेत्, साधारणमृदुमध्यमसारीद्वयस्याप्यन्यस्य सद्भावात्। एवं साधितेन मन्द्रपादीनां स्वयंभूत्वेन मेरौ तन्त्रीजनितानामपि सपसमानां स्वयंभूत्वं साधयति—तत्तैरिति। तत् मन्द्रपमध्यसमध्यमानां स्वयंभूत्वाद्धेतोः, तैर्मन्द्रपञ्चमादिभिः समाः सदृशनादाः, मुक्ततन्त्रीजाः, मुक्ता वामहस्ताङ्गुलिश्लेषरहिता यास्तन्त्र्यः प्रथमादयश्चतस्रः, ताभ्यो जाताः सपसमा अनुमन्द्रषड्जानुमन्द्रपञ्चममन्द्रषड्जमन्द्रमध्यमाः स्वयंभुवः; ज्ञेया इति शेषः। नीचोच्चस्थानकृत एवैषां भेदो न रूपभेद इत्यर्थः॥ ३२॥

एवं मेरुगतस्वयंभूस्वरपङ्क्तिप्रामाण्येन प्रथमद्वितीयादिसारीगतानामपि स्वरपङ्क्तीनां प्रामाण्यमाह—

ये रिधरिमृदुपमुख्यास्तन्मूलं स्थापिता यथाशास्त्रम्।
तेऽपि स्वयंभुव इवाष्टम्यूर्ध्वं तिसृषु तन्त्रीषु॥ ३३॥
पूर्ववदपराच्च खात्पगपैस्तत्रोचितैः समात्क्रमतः।
श्रुत्यैकयाधिकत्वं न्यूनत्वं वा न दोषाय॥ ३४॥

ये रिधरिमृदुपमुख्या इति। रिधरिमृदुपा मुख्या आद्या येषां गनिगपादीनां ते, ये, यथाशास्त्रं शास्त्रोक्तस्वस्वश्रुतिमानेन, तन्मूलम्, ते मेरुगतसपसमा मूलं यस्मिन्कर्मणीति,ताननुसृत्येति यावत्; तथा स्थापिताः, प्रथमादिसारीसप्तक इति शेषः; तेऽपि स्वयंभुव इव, प्रमाणभूता इति शेषः; स्वयंभुवः सपसमा यथा सप्रामाण्यास्तथा तदनुसारेण स्थापिता एतेऽपीत्यर्थः। तत्र प्रथमसार्यां रिधरिमृदुपाः, द्वितीयायां गनिगपाः, तृतीयायां साधारणकैशिकिसाधारणाः, तुरीयायां मृदुममृदुसमृदुमधैवताः, पञ्चम्यां मसमनिषादाः, षष्ठ्यां कैशिक्येक एव, सप्तम्यां मृदुपऋषभमृदुपमृदुसाः। एवं पङ्क्तिसप्तकप्रामाण्ये हेत्वन्तरमप्याह—अष्टम्यूर्ध्वमिति। अष्टमी, अनुमन्द्रमृदुपमन्द्रऋषभमन्द्रमृदुपमन्द्रमृदुसापेक्षयैकश्रुत्यनुमानेनानुमन्द्रपमन्द्रगमन्द्रपमध्यससिद्ध्यर्थं स्थापनीया-

ष्टमसारी, तस्या ऊर्ध्वमुपरि, पूर्ववत्, चतुर्थतन्त्र्यां तस्या एव सार्या उपरि तच्छ्लेषं विना मध्यषड्जापरध्वनिवत्, तिसृषु तन्त्रीषु प्रथमाद्वितीयातृतीयासु, अपराद्वाचान्यसूक्ष्मध्वननाच्च। कीदृशात्? तत्रोचितैरष्टमसार्यो योग्यैः पगपैः, अनुमन्द्रपञ्चममन्द्रगांधारमन्द्रपञ्चमैः, क्रमतः समात्सदृशात्। आद्यया मेरुगतस्वयंभूस्वरपङ्क्त्या अन्त्ययाष्टमसारीगतस्वयंभूस्वरपङ्क्त्या च मध्यगतस्वरपङ्क्तीनां सर्वासामपि प्रामाण्यमिति भावः। एतेषु स्थापितस्वरेषु क्वचनैकश्रुत्याधिकत्वन्यूनत्वे अपि रञ्जनहानिकरे न भवत इति ससंप्रदायमाह—श्रुत्यैकयेति। एकया श्रुत्याधिकत्वं न्यूनत्वं वा दोषाय न ॥ ३४ ॥

अनुमन्द्रमन्द्रतारेष्विति स्थितिरपि स्वरस्वरूपविदाम्।
स्वधिया मयेति गदितं तत्प्रामाण्यं निजानुभवात् ॥ ३५ ॥
अनुमन्द्रमन्द्रयोरिति ते द्वादश मेरुसारिकासूक्ताः।
तन्मानतः स्वराणां सार्योऽत्र च मध्यताराणाम् ॥ ३६ ॥

केषु? अनुमन्द्रतारेषु मध्यस्थानस्थस्वरान्विना स्वरेषु, इति स्वरस्वरूपविदामपि स्थितिः स्वरतत्त्वं जानतामपि व्यवहारः। अनुमन्द्रमन्द्रेत्यादिद्वंद्व आनुपूर्व्येण पूर्वनिपातः। इत्युक्तं स्वरप्रमाणं निगमयति—स्वधियेति। मया, इति तत्प्रामाण्यं तेषां स्थापितस्वराणां यत्प्रामाण्यं तत्, निजानुभवात्स्वानुभवतः स्वधिया स्वबुद्ध्या गदितम्। एवं स्थापिताननुमन्द्रमन्द्रस्वरान् संख्यापूर्वं निगमयन्मध्यतारस्वरार्थमपि सारीस्थापनमाह—अनुमन्द्रमन्द्रयोरितीति। अस्मिन्स्थानद्वये ते स्वरा मेरुसारिकासु मेरौ सारिकासु च द्वादशोक्ताः। तत्र शुद्धाः सरिगमपधनयः सप्त, विकृताः साधारणमृदुमम्रृदुपकैशिकिमृदुसाः पञ्चेत्यर्थः। अत्रास्यां शुद्धमेलायां मध्यताराणां च स्वराणां सार्यः, तन्मानतः, तासां स्वस्वश्रुतीनां मानादनुमानात्, यद्वा तेषामनुमन्द्राणां मन्द्राणां वा स्वराणां मानात्, ध्वनिसादृश्येनेति यावत् ॥ ३६ ॥

स्थाप्याश्चतुर्दशान्येऽतितारषड्जार्थमपि परामाहुः।
मध्यास्ताराश्च परं ते ग्राह्यास्तुर्यतन्त्रीजाः ॥ ३७ ॥

अन्तरकाकल्यौ तीव्ररिधौ तीव्रतममध्यमश्चेति ।
पञ्च न किं द्वादशवत्सारीषूक्ता ब्रुवे तत्र ॥ ३८ ॥

स्थाप्या इति । चतुर्दश स्थाप्याः । अन्ये केचिदिदानींतनाः, परामपि पञ्चदशीमपि सारीम् ; अतितारस्तारमतिक्रान्तः, ततोऽधिक इति यावत् ; स चासौ षड्जश्च तदर्थम् आहुर्वदन्ति । एतेनैकरागमेलाख्यैव शुद्धमेलासंकीर्णताया-उक्ता भवति । अखिलरागमेलाख्यशुद्धमेलायां त्वन्या दश सारिका मतान्त-रेणैकादश वा वक्तव्याः स्युः । तदेवमेकरागमेलाख्यायां शुद्धमेलायां मेरु-सहिता द्वाविंशतिः सार्यः, मतान्तरे तु त्रयोविंशतिः । एवमखिलरागमेलाख्य-शुद्धमेलायामपि समेरवो द्वात्रिंशत्, मतान्तरे त्रयस्त्रिंशद्यथास्वं सारिका ऊह्याः । आहुरिति 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (३-४-८४) इति साधु । एवं सकलस्वरार्थं सारीस्थापनं निरूप्य तन्त्रीविशेषेण स्थानविशेषे स्वरवादनं निय-मयति—मध्या इति । मध्यास्ताराश्च ते शुद्धविकृतस्वराः, तुर्यतन्त्रीजाः परं चतुर्थतन्त्रीसमुत्था एव ग्राह्याः प्रयोज्याः ; न तु प्रथमद्वितीयतृतीयतन्त्री-जनिता इत्यर्थः । तास्वग्रेऽग्रे सारीतन्त्रीसंश्लेषवैषम्येण स्वरस्वरूपस्य मन्दत्वा-दिति भावः । अत्र प्रथमविवेके शुद्धाः सप्त विकृताश्चतुर्दश स्वरा अवबोधिताः । तत्रानुमन्द्रयोर्द्वादशस्वरसिद्ध्यर्थं सारीस्थापने कश्चिदाशङ्कते—अन्तरकाकल्या-विति । द्वादशवत्, शुद्धसरिगमपधनिसाधारणमृदुममृदुपकैशिकिमृदुसा इव, अन्तरकाकल्यौ तीव्ररिधौ तीव्रतममध्यमश्चेति पञ्च, स्वरा इति शेषः ; सारीषु किं नोक्ताः ? यथा द्वादशसिद्ध्यर्थं समेरु सार्योऽष्ट स्थापितास्तथान्तरादिपञ्च-कसिद्ध्यर्थमपरा अपि पञ्च किं न स्थापिताः ? इति प्रश्नार्थः । तन्त्रान्तरो नाम मध्यमश्रुतिद्वयग्राही गान्धारः, काकली षड्जश्रुतिद्वयग्राही निषादः, तीव्ररिर्गा-न्धारादिमश्रुतिग्राह्यृषभः, तीव्रधो निषादादिमश्रुतिग्राही धैवतः, तीव्रतममध्यमः पञ्चमश्रुतिद्वयग्राही मध्यमः । प्रत्युत्तरं प्रतिजानीते—ब्रुवे तत्रेति । स्पष्टम् ॥३८॥

तदेवाह—

साधारणादिसारीष्वपकर्षादधिकिता यदा श्रुतयः ।
पञ्च तदान्तरमुख्या इह स्युरिति ताः पृथङ् नोक्ताः ॥ ३९ ॥

साधारणादिसारीष्विति । साधारणादीनां याः सार्यस्तासु यदापकर्षाद्वामहस्ताङ्गुल्या तन्त्र्याकर्षणात्, श्रुतयोऽधिकिता अधिकाः कृताः, तदान्तरमुख्या अन्तरकाकल्यादयः पञ्च, इह साधारणादिसारीष्वेव स्युरिति ताः पञ्च सार्यः पृथङ् नोक्ताः । तत्र प्रथमतन्त्र्यास्तृतीयतन्त्र्याश्च तृतीयसार्यो यदैकश्रुतिरपकर्षादधिका कृता, तदा तस्यामेव सार्यां मध्यमश्रुतिद्वयलाभादनुमन्द्रमन्द्रावन्तरावुत्पद्येते । एवं द्वितीयतन्त्र्यास्तृतीयसार्यां चतुर्थतन्त्र्याः षष्ठतन्त्र्यां चाकर्षणादेकश्रुत्यधिकीकरणेन षड्जश्रुतिद्वयलाभादनुमन्द्रमन्द्रे काकल्यावुत्पद्येते । एवमेव प्रथमतन्त्र्यास्तृतीयतन्त्र्याश्च प्रथमसार्यामाकर्षणादेकश्रुत्यधिकीकरणेन गान्धारादिमश्रुतिलाभात्तीव्रऋषभावनुमन्द्रमन्द्रावुत्पद्येते । तथा द्वितीयतन्त्र्याः प्रथमसार्यां चतुर्थतन्त्र्याश्चतुर्थसार्यां चाकर्षणादेकश्रुत्यधिकीकरणेन निषादादिमश्रुतिग्राहिणावनुमन्द्रमन्द्रौ तीव्रधैवतावुत्पद्येते । तद्वत्प्रथमतन्त्र्यास्तृतीयतन्त्र्याश्च पञ्चमसार्यामाकर्षणेन श्रुतिद्वियस्याधिकीकरणात्पञ्चमश्रुतिद्वयग्राहिणावनुमन्द्रमन्द्रौ तीव्रतममध्यमावुत्पद्येते इत्यर्थः । आकर्षणेन स्वरान्तरत्वकरणं भरतादीनामपि संमतम् । तथा च **भरतः**—' द्विधा तानक्रिया तन्त्र्यां प्रवेशान्निग्रहात्तथा । तत्र प्रवेशनमधरस्वरविप्रकर्षादुत्तरस्वरमार्दवाद्वा, निग्रहश्चासंस्पर्शः ' (नाट्य० २८-३२) इति । अधिकितेति ' तत्करोति ' इति ण्यन्तान्निष्ठा ॥ ३९ ॥

अमुमेव विप्रकर्षपक्षमङ्गीकृत्य मतान्तरमाह—

**केचन मध्यमतन्त्रीनिषादसार्यां प्रवेशतो ब्रुवते ।**
**कैशिकिकाकल्यावपि सार्यूनैका मते तेषाम् ॥ ४० ॥**
**अत्रानुमन्द्रषड्जस्थाने त्वनुमन्द्रमध्यमोऽप्यस्ति ।**
**मध्यममृदुपौ तत्र ग्राह्यौ नान्ये पतन्त्र्यां ते ॥ ४१ ॥**

केचनेति । केचन केचित्, मध्यमतन्त्री मन्द्रमध्यमसंबन्धिनी चतुर्थतन्त्रीः, तस्या या निषादसारी पञ्चमी सारी तस्यां कैशिकिकाकल्यावपि प्रवेशतो ब्रुवते वदन्ति । पूर्ववदेकश्रुत्याकर्षणेन कैशिक्युदेति, श्रुतिद्वयाकर्षणेन च काकल्युदेति । फलितमाह—सारीति । तेषां मते, एका सार्यूना, निषादसारी-

समीपस्था कैशिकिसारी न लगतीत्यर्थः। तदा त्वेकरागमेलाख्यशुद्धमेलायां मेरुणा सहैकविंशतिः सार्यः, अतितारषड्जसारीपक्षे तु तेनैव सह द्वाविंशतिः सार्यो भवन्ति। एवमखिलरागमेलवीणायामपि कैशिकिसारीत्रये न्यूने मेरुणा सहैकोनत्रिंशत्। अतितारपक्षे तु तेनैव सह त्रिंशत्॥ एवं ज्ञातस्वरस्थापनाप्रसङ्गेन प्रसिद्धमतान्तरमाह—अत्रानुमन्द्रेति। अत्रास्मिन्कैशिकिसारीन्यूनत्वपक्षेऽनुमन्द्रषड्जस्य यत्स्थानं प्रसङ्गस्तत्र त्वनुमन्द्रमध्यमोऽप्यस्ति प्रथमतन्त्र्यामनुमन्द्रमध्यमो मेरौ भवति। प्रथमसार्यां तु मृदुपः, द्वितीयायां शुद्धपः, चतुर्थ्यां शुद्धधः, पञ्चम्यां शुद्धनिः, तत्रैव प्रवेशतः कैशिकिकाकल्यौ, षष्ठ्यां मृदुसः। सर्वेऽप्यनुमन्द्राः। एतेषु प्रयोगार्हौ द्वावेवेत्याह—मध्यमेति। तत्र तेषु मध्यममृदुपौ ग्राह्यौ, नान्ये पञ्चमादयः। तत्र हेतुमाह—पतन्त्र्यां त इति। ते पञ्चमादयः पतन्त्र्यामनुमन्द्रपञ्चमसंबन्धिन्यां द्वितीयतन्त्र्याम्, पुनः सन्तीति शेषः॥ ४१॥

एवमस्यां वीणायामनुमन्द्रादयश्चतुर्विधाः स्वराः कथिताः। तत्र कश्चित्पृच्छति—

ननु तनुवीणे तुल्ये गदिते शास्त्रेऽत्र नादसंवादात्।
मन्द्रादित्रयमर्हं तनुवत्तन्नानुमन्द्र इह॥ ४२॥
नादोऽतिसूक्ष्मनामा नाभौ वदतेति शार्ङ्गदेवेन।
सूचित इहानुमन्द्रो वीणार्होऽयं तदुक्तोऽत्र॥ ४३॥

नन्नु तनुवीणे इति। ननु प्रश्ने। अत्र संगीतशास्त्रे तनुवीणे देहवल्लक्यौ तुल्ये गदिते समे कथिते। कुतः? नादस्य श्रुत्यादेर्यः संवाद एकत्वप्रकाशनं तस्मात्। तथा च श्रुतिस्वरूपनिश्चये निःशङ्कः—

'व्यक्तये कुर्महे तासां वीणाद्वंद्वे निदर्शनम्'। (सं१-३-१०) इति।

तत्तस्मात्तनुवीणयोः साम्याद्धेतोः, इह वीणायां तनुवद्देह इव मन्द्रादि त्रयमर्हं वक्तुं योग्यम्; न त्वनुमन्द्रः, देहेऽनुमन्द्रस्याभावात्। वीणायामनुमन्द्रकथनमयुक्तमिति प्रश्नार्थः॥ तत्रोत्तरयति—नाद इति। नाभौ, अतिसूक्ष्मनामा अति-

सूक्ष्म इतिसंज्ञो नादः, आविर्भवतीति शेषः, इति वदता शार्ङ्गदेवेन, इह देहे नाभौ वाऽनुमन्द्रः सूचितः, तत्सूचनामात्रं कृतम् ; परं तु नाभिस्थस्य तस्य गानेऽनुपयोगान्मन्द्रादिवदनुमन्द्र इत्यपि नाम व्यवहाराय न कथितमित्यर्थः। तथा च निःशङ्कः—'नाभिहृत्कण्ठेत्यादि नादोऽतिसूक्ष्मः (सं १-३-४,५) इति। तत्प्राचीनानुमतत्वाद्धेतोः, वीणार्हो वीणोपयुक्तः, अयमनुमन्द्रोऽत्र ग्रन्थ उक्तः। नाभौ द्वाविंशतिनाड्यसंभवाच्छ्रुतीनामनुदयः, वीणायां त्वतिनीचानामपि श्रुतीनां सद्भावादनुमन्द्रो युक्तमेवात्रोक्त इति भावः॥ ४२, ४३॥

एवं प्रथमं शुद्धमेलाख्यभेदं लक्षयित्वा द्वितीयं मध्यमेलाख्यभेदं लक्षयितुं प्रतिजानीते—

अथ मध्यमेलवीणा लक्ष्यत इतरात्र चतसृषूर्ध्वासु।
मेढकतस्तन्त्रीषु ज्ञेया त्वाद्यानुमन्द्रपगा॥ ४४॥
मन्द्रसयुता द्वितीया तृतीयका मन्द्रपञ्चमं दधती।
तुर्या समन्द्रषड्जा तिस्रः श्रुतयस्तु पार्श्वस्थाः॥ ४५॥
मन्द्रसमन्द्रपमध्यसयुक्ताः क्रमतः स्वरस्थितिः सैव।
सारीषट्के तेषु प्रामाण्यं पूर्ववत्किं तु॥ ४६॥
पञ्चमतन्त्रीजसरी तद्प्रयोज्यौ पुनः सतन्त्र्योर्यत्।
तत्संख्याश्च न सार्योऽतितारगाः परमते शिष्टाः॥ ४७॥

अथेति। अथेतरा पश्चादुद्दिष्टा मध्यमेलवीणा लक्ष्यते। लक्षणमेवाह— अत्र चतसृष्वित्यादिना मात्राविंशत्योनेनार्यासप्तकेन। अत्रैतस्यां चतसृषु मेढकतो मेरोरूर्ध्वासु तन्त्रीषु, मध्य इत्यर्थात ; आद्या प्रथमा तु, अनुमन्द्रो यः पः पञ्चमस्तं गच्छति प्राप्नोतीत्यनुमन्द्रपगा ज्ञेया। ज्ञेयेति सर्वत्रान्वेति॥ द्वितीया मन्द्रसयुता मन्द्रषड्जयुक्ता, तृतीयका तृतीया मन्द्रपञ्चमं दधती, तुर्या चतुर्थी समध्यषड्जा मध्यषड्जेन सह वर्तमाना। दधतीति शत्रन्तम्। श्रुतित्रये स्वरानाह—तिस्र इति। तिस्रः पार्श्वस्थाः श्रुतयस्तु क्रमत ऊर्ध्वमध्याधरक्रमेण मन्द्रसमन्द्रपमध्यसयुक्ता ज्ञेयाः। अत्र वचनविपरिणामः। मन्द्रषड्जयुक्तोर्ध्वश्रुतिः, मन्द्रपञ्चमयुक्ता मध्यश्रुतिः, मध्यषड्जयुक्ताधरश्रुतिरित्यर्थः। सारीषट्के

सैव पूर्वैव स्वरस्थितिः स्वरस्थापना। तेषु स्थापितस्वरेषु प्रामाण्यं पूर्ववत्। ज्ञेयमिति शेषः। तत्र मेरावनुमन्द्रपमन्द्रसमन्द्रपमध्यसाः पूर्ववत्संवादिनः। प्रथमसार्यामनुमन्द्रधमन्द्ररिमन्द्रधमध्यऋषभाः संवादिनः। द्वितीयसार्यामनुमन्द्रनिमन्द्रगमन्द्रनिमध्यगान्धाराः संवादिनः। तृतीयसार्यामनुमन्द्रकैशिकिमन्द्रसाधारणमन्द्रकैशिकिमध्यसाधारणाः संवादिनः। चतुर्थ्यामनुमन्द्रमृदुसमन्द्रमृदुममन्द्रमृदुसमध्यमृदुमाः संवादिनः। पञ्चम्यां मन्द्रसमन्द्रममध्यसमध्यमध्यमाः संवादिनः। षष्ठ्यां मन्द्ररिमन्द्रमृदुपमध्यरिमध्यमृदुपाः संवादिनः। एवं संवादित्वेन पङ्क्तिसप्तकेऽपि प्रामाण्यम्। अनुमन्द्रपञ्चमादिप्रथमपङ्क्तेः पूर्ववत्स्वयंभूत्वान्मन्द्रगान्धारमन्द्रपञ्चममध्यगान्धारमध्यपञ्चमरूपाष्टमपङ्क्तेरपि स्वयंभूत्वादन्तर्गतस्वरपङ्क्तीनामपि स्वयंभूत्वेन च प्रामाण्यं ज्ञेयम्। एवं सप्रामाण्येष्वपि स्वरेषु त्याज्यावाह—किं त्विति। किं तु, परं तु पञ्चमयोरनुमन्द्रमन्द्रपञ्चमयोर्ये तन्त्र्यौ तयोर्जायेते इति तौ तज्जौ सरी मन्द्रौ मध्यौ च षड्जऋषभौ तत्तो हेतोरप्रयोज्यौ त्याज्यौ। कुतः? यत्पुनर्भूयः सयोर्मन्द्रमध्यमषड्जयोर्ये तन्त्र्यौ तयोः, ताविति वर्तेते इति च शेषः। त्यागे मुख्यहेतुस्तु पूर्वयोर्मन्द्रध्वनित्वम्। अस्यां शुद्धमेलापेक्षया न्यूनसारीकतां चाह—तत्संख्याश्चेति। अत्रेति प्रकरणाद्गम्यते। अत्र सार्यः, सा संख्या यासामिति तत्संख्याः, शुद्धमेलासारीसमसंख्याका न सन्ति, अस्मिन्मते तारस्थानात्परं स्थानान्तराभावादिति भावः। इयमपि शुद्धमेलावदेकरागमेलाखिलरागमेलेति च द्विधा। तत्रैकरागमेलाख्यमध्यमेलायां समेरवः सप्तदश सार्यः। एकरागमेलाख्यशुद्धमेलापेक्षया गान्धारादेव, इहत्यनिषादात्परस्य सारीचतुष्टयस्य कैशिक्यर्थाधिकमार्याश्च न्यूनत्वात्। मतान्तरेण त्वतितारे षड्जेऽष्टादश सार्यः। अखिलरागमेलाख्यशुद्धमेलापेक्षया मृदुमादेव, इहत्यमृदुषड्जात्परस्य सारीसप्तकस्य कैशिक्यर्थाधिकसार्याश्च न्यूनत्वात्। मतान्तरेण त्वतितारे षड्जे पञ्चविंशतिः। एवमवशिष्टाः पञ्चाष्ट च सारीः सार्थकयितुं परमतमाह—अतितारगा इति। शिष्टाः, अस्मन्मतेऽवशिष्टाः सार्यः परमते केषांचिन्मतेऽतितारगा अतितारारख्यषड्जादिस्वरगामिन्यः, भवन्तीति शेषः। अन्यमते पञ्चमपर्यन्तमतितारस्वरा अपि सन्तीति भावः॥ ४४—४७॥

मध्यमेलायामेव मतान्तरेण स्वरस्थापने विशेषमाह—

इयमपि मयुतान्यमते पञ्चमतन्त्रीषु पूर्ववच्छेषम् ।
त्याज्यौ मन्द्रसतन्त्र्याः शुद्धममृदुपौ मतन्त्र्यां यत् ॥ ४८ ॥

इयमपीति । इयमन्यमते पञ्चमतन्त्रीषु मयुताप्यस्यामेव मेरुस्थयोः प्रथमतृतीयतन्त्र्योरनुमन्द्रपञ्चमयोः स्थाने तादृशावेव मध्यमौ स्थाप्येते इत्यर्थः । पञ्चमतन्त्रीष्विति बहुवचनेन श्रुतितन्त्रीस्थपञ्चमस्थानेऽपि मध्यमः स्थाप्यते । शेषं पूर्ववत्, अवशिष्टं मध्यमेलालक्षणवज्ज्ञेयम् । तेन मेरावनुमन्द्रमध्यममन्द्रषड्जमन्द्रमध्यममध्यषड्जाः; प्रथमसार्यामनुमन्द्रमृदुपमन्द्ररिमन्द्रमृदुपमध्यऋषभाः; द्वितीयायामनुमन्द्रपमन्द्रगमन्द्रपमध्यगान्धाराः; तृतीयायामनुमन्द्रधमन्द्रसाधारणमन्द्रधमध्यसाधारणाः; चतुर्थ्यामनुमन्द्रनिमन्द्रमृदुममन्द्रनिमध्यमृदुमाः; पञ्चम्यामनुमन्द्रकैशिकिमन्द्रममन्द्रकैशिकिमध्यमध्यमाः; षष्ठ्यामनुमन्द्रमृदुसमन्द्रमृदुपमन्द्रमृदुसमध्यमृदुपाः; ऊर्ध्वतन्त्रीचतुष्टये । श्रुतित्रये तु, ऊर्ध्वतन्त्र्यां मन्द्रसः, मध्यतन्त्र्यां मन्द्रमः, अधरतन्त्र्यां च मन्द्रसः । स्वरपङ्क्तिप्रामाण्यमपि यथायोगं संवादित्वेन स्वयंभूत्वेन च ज्ञेयम् । सारीन्यूनत्वादि च तद्वदेव । अत्रापि त्याज्यस्वरावाह—त्याज्याविति । मन्द्रसतन्त्र्याः शुद्धममृदुपौ त्याज्यौ; द्वितीयाया मन्द्रषड्जस्य तन्त्र्याः पञ्चम्यां सार्यां मन्द्रमध्यमः, षष्ठ्यां मन्द्रमृदुपश्च प्रयोगार्हौ नेत्यर्थः । कुतः ? मतन्त्र्यां मन्द्रमध्यमसंबन्धिन्यां तृतीयतन्त्र्यां शुद्धममृदुपौ, मेरुप्रथमसार्योर्वर्तेते इति च शेषः । त्यागे मन्द्रध्वनित्वमेव हेतुः ॥ ४८ ॥

मतान्तरेण मध्यमेलाया एव चतुस्तन्त्रीकं भेदमाह द्वाभ्याम्—

पूर्वास्तिस्रस्तन्त्रीर्विनात्र तन्त्र्यां तु मध्यषड्जस्य ।
त्रिस्थानस्वरसिद्ध्यै स्थाप्यन्ते सारिकाः कैश्चित् ॥ ४९ ॥
अतितारपञ्चमादा वामे पार्श्वे श्रुतिस्तु मन्द्रसयुक् ।
दक्षिणपार्श्वे [1]मध्यसतारसयुक्ते श्रुती चास्याम् ॥ ५० ॥

[1] मध्यमतारसयुक्ते.

पूर्वास्तिस्र इति। अत्र मध्यमेलायां पूर्वास्तिस्रस्तन्त्रीः प्रथमा द्वितीया तृतीया विना आसां बन्धनमकृत्वैव मध्यषड्जस्य तन्त्र्यां तु मध्यषड्जवत्यां चतुर्थतन्त्र्यामेव कैश्चित्सारिकाः स्थाप्यन्ते। किमर्थम्? त्रिस्थानस्वराणां मध्यताराततिताराणां स्वराणां या सिद्धिस्तस्यै॥ अतितारस्वराणां मर्यादामभिविधिं चाह—अतितारपञ्चमादिति। अतितारपञ्चमाद् आ तं मर्यादीकृत्य, अतितार पञ्चमं विना सार्यः स्थाप्यन्त इत्यर्थः। यद्वा तत्पञ्चमाद् आ तमभिव्याप्य सार्यः स्थाप्यन्ते तेन मर्यादापक्षे मेरुणा सहाष्टादश सार्यो भवन्ति; अभिविधिपक्षे तु मेरुणा सहैकोनविंशतिः। ०पञ्चमादिति 'आङ्मर्यादाभिविध्योः' (२-१-१३) इति कर्मप्रवचनीयत्वात् 'पञ्चम्यपाङ्—' (२-३-१०) इति पञ्चमी। श्रुतिषु स्वरानाह—वाम इति। अस्यामूर्ध्वैकतन्त्र्यां वीणायां वामे पार्श्वे, दण्डस्येत्यार्थम्। तत्र श्रुतिस्तु मन्द्रसयुग् मन्द्रषड्जवती; च परं दक्षिणपार्श्वे श्रुती [1]मध्यसतारसयुक्ते मध्यषड्जतारषड्जवत्यौ। एवं चतुस्तन्त्रिकेयम्। इयमेव पार्श्वयोर्मन्द्रसमध्यसयुतश्रुतिका त्रितन्त्रीत्यन्ये। इयमेवाखिलरागमेला पूर्ववदित्यपरे। इयमेव पङ्क्तिराहित्येन सदृशसर्वसारीकेति केचन॥ ४९, ५०॥

ननु प्राचीनैरनुक्तमतितारं परेऽपि कथं मन्यन्त इत्यत्राह—

तन्त्र्यां मन्वत एकेऽतितारमपि कृत्रिमोक्तितः प्राचाम्।
किं त्वतितीव्रे नादे न स्वरता रञ्जनाभावात्॥ ५१॥

तन्त्र्यां मन्वत इति। एके केचन तन्त्र्यां वीणातन्त्रिकायाम्, अतितारमपि, एतदाख्यं पञ्चमं नादमपि मन्वते मन्यन्ते। तत्र प्राचीनसूचनार्थं हेतुमाह—प्राचां कृत्रिमोक्तितः कृत्रिम इत्युक्तिः कृत्रिमोक्तिः, तस्या हेतोः। तत्र निःशङ्कः—

'[2]अतिसूक्ष्मश्च सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः।
इति पञ्चाभिधां धत्ते पञ्चस्थानेष्वनुक्रमात्॥' (सं० १-३-९) इति।

ततश्च मुखे केवलं स गानानुपयोगी, वीणायां तु तादृक्श्रुतिसद्भावादुपयुक्त इति तेनापि सूचितमिति भावः। तर्ह्यनुमन्द्रवद्भवतापि किं नाङ्गीक्रियत इत्यत्राह—

[1] मध्यमतारसयुक्ते.

[2] नादोऽतिसूक्ष्मः सूक्ष्मश्च इति संगीतरत्नाकरपाठः

किं त्विति। किं तु परं तु, अतितीव्रेऽतितीक्ष्णे नादे स्वरता स्वरत्वं न, संगच्छत इति शेषः। तत्र हेतुमाह—रञ्जनाभावादिति। अतितैक्ष्ण्येन रञ्जकः स न भवतीत्यर्थः। तथा च निःशङ्कः—

'स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते' (सं० १-३-२४) इति।

एवं सति वीणाविशेषेण स्थापनविशेषेण वा यदातितीव्रेऽपि रञ्जनकारित्वं तदा अस्मन्मतेऽप्यतितारो विद्यत एवेति भावः॥ ९१॥

एवं प्रसिद्धभेदानुक्त्वान्यानपि भेदान्मन्यमान आह—

अन्येऽपि सन्ति भेदा अतिप्रसिद्धा न ते ततो नोक्ताः।
सप्रामाण्यो भेदः परं त्वनुक्तोऽप्युपादेयः॥ ५२॥

अन्येऽपीति। अन्येऽप्युक्तेभ्यः परेऽपि भेदाः सन्ति। ते किमिति नोक्ता इत्यत्राह—ते भेदा अतिप्रसिद्धा न, ततो हेतोर्नोक्ताः; अतिप्रसिद्ध लक्ष्याणामेवात्रानुलक्षितत्वादिति भावः। प्रामाण्यभेदमनुक्तमपि गृह्णीयादित्याह—सप्रामाण्य इति। परं तु मयानुक्तोऽपि भेदः सप्रामाण्य उपादेयो ग्राह्यः। तद्यथा—शुद्धमेलायाश्चतुर्थ्यां तन्त्र्यां मन्द्रमध्यमस्थाने मन्द्रपञ्चगोऽप्यस्ति। श्रुतयः पूर्ववत्। तत्र मेरुस्था अनुमन्द्रसानुमन्द्रपमन्द्रसमन्द्रपञ्चमाः संवादिनः। प्रथमसार्यामनुमन्द्रऋषभानुमन्द्रधैवतमन्द्रऋषभमन्द्रधाः संवादिनः। द्वितीयायामनुमन्द्रगानुमन्द्रनिमन्द्रगमन्द्रनिषादाः संवादिनः। तृतीयायामनुमन्द्रसाधारणानुमन्द्रकैशिकिमन्द्रसाधारणमन्द्रकैशिकिनः संवादिनः। तुर्यायामनुमन्द्रमृदुमानुमन्द्रमृदुसमन्द्रमृदुममन्द्रमृदुसाः संवादिनः। पञ्चम्यामनुमन्द्रमानुमन्द्रसमन्द्रममन्द्रसाः संवादिनः। षष्ठ्यामनुमन्द्रमृदुपानुमन्द्रऋषभमन्द्रमृदुपमन्द्रऋषभाः संवादिनः। प्रामाण्यं तु पङ्क्तीनां संवादित्वेन मेरुपङ्क्त्यष्टमपङ्क्त्योः स्वयंभूत्वेनापीति दिक्॥ ९२॥

सकलकलेत्युपनामकसोमकविहिते हितेऽल्पबुद्धीनाम्।
वीणाभिदां द्वितीयो रागविबोधे विवेकोऽयम्॥ ५३॥

सकलकलेति । वीणाभिदां रुद्रवीणाभेदानां संबन्ध्ययं विवेको रागविबोधे द्वितीयः । शिष्टं स्पष्टम् ॥ ९३ ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ।
रागविबोधविवेको द्वितीय एवं मनाग्विवृतः ॥

इति श्रीसोमनाथनिर्मिते रागविबोधे द्वितीयो विवेकः ॥ २ ॥

# तृतीयो विवेकः

एवं नानाभेदां वीणां निरूप्य तया प्रकाश्यान्मेलान्वक्तुं प्रतिजानीते—

**अथ कथ्यन्ते मेलाः क्रमरूपास्ते भवन्ति खरसाङ्काः ।**
**पञ्चदशभी रिगमधनिभेदैर्नियतश्रुतितया च[1] ॥ १ ॥**

अथ कथ्यन्त इति । मिलन्ति वर्गीभवन्ति रागा यत्रेति तदाश्रयाः स्वरसंस्थानविशेषा मेलाः, 'थाट' इति भाषायाम् ; ते कथ्यन्ते । कीदृशाः ? क्रमरूपाः, क्रम आनुपूर्व्या स्वरारोहणमेव रूपं येषां ते, अव्युत्क्रमस्थापितस्वरा इति यावत् । एवं तेषां सामान्यलक्षणमुक्त्वा तत्सख्यां प्रतिजानीते—ते भवन्तीति । ते मेलाः खरसाङ्काः (९६०) षष्ट्यधिकानि नव शतानि भवन्ति संभवन्ति । कैः कृत्वा ? पञ्चदशभी रिगमधनिभेदैः, तीव्ररिप्रमुखैर्ऋषभगान्धारमध्यमधैवतनिषादभेदैः, च पुनः, नियताश्चतुस्त्रिद्व्यादित्वेन निश्चिताः श्रुतयो येषां तेषां भावस्तत्ता, तया । शुचि सप्तकेनापीति वा पाठः । शुचि शुद्धं चतुस्त्रिद्व्यादित्वेन पूर्वं नियतश्रुतिकं यत्सप्तकम्, शुद्धाः सप्त स्वरा इति यावत् । तेन च । अपिः समुच्चये । तद्भेदपञ्चदशकेन शुद्धशब्दस्वरतया च सा संख्या संपद्यते । पञ्चदशभी रिगेति 'ढ्रलोपे—' (६-३-१११) इति दीर्घः ॥ १ ॥

प्रथमविवेकोक्तानपि पञ्चदश भेदानानुपूर्वीमात्रनिरूपणाय पुनरप्याह तीव्ररीति सार्धयार्यया—

**तीव्ररितीव्रतररितीव्रतमरिसाधारणान्तरा मृदुमः ।**
**तीव्रतमगतीव्रतममृदुपा धौ तीव्रतीव्रतरौ ॥ २ ॥**
**तीव्रतमधकैशिकिनौ काकल्यथ मृदुस इत्यमी क्रमतः ।**

[1] ०भेदैः श्रुतिसप्तकेनापि.

तीव्रेति। अमी भेदा इति क्रमतः, ज्ञेया इति शेषः। तीव्ररीत्याद्यन्तरा इत्यन्तमेकं पदम्; तीव्रतमगेत्यादि मृदुपा इत्यन्तं च। धौ तीव्रतीव्रतरौ, तीव्रधस्तीव्रतरधश्चेत्यर्थः। अथ ततः। शिष्टं स्पष्टम् ॥ २- ॥

इदानीमग्र उपयोगाय केषां के भेदा इत्यपि पुनरत्र स्पष्टयति, तीव्ररिमुखमिति सार्धयार्यया—

**तीव्ररिमुखं त्रिभिद्रेर्भेदाः साधारणप्रमुखाः ॥ ३ ॥**
**गस्य मताश्चत्वारो द्वौ तीव्रतममुखौ मतौ मस्य।**
**तीव्रधमुखाश्च धस्य त्रयस्त्रयः कैशिकिमुखाने: ॥ ४ ॥**

तीव्रेति। रेर्ऋषभस्य, तीव्ररिर्मुखमादिर्यस्य तत्, तिसृणां भिदां समाहारस्त्रिभित्; तीव्ररितीव्रतररितीव्रतमरय ऋषभस्य भेदा इत्यर्थः। साधारणमुखाश्चत्वारो भेदा गस्य मताः, साधारणान्तरमृदुमतीव्रतमगा गान्धारस्य भेदा इत्यर्थः। तीव्रतममुखौ द्वौ, भेदाविति शेषः, मस्य मतौ; तीव्रतममृदुपौ मध्यमस्य भेदावित्यर्थः। तीव्रधमुखास्त्रयः, धस्य, भेदा मता इति शेषः; तीव्रधतीव्रतरधतीव्रतमधा धैवतस्य भेदा इत्यर्थः। कैशिकिमुखास्त्रयः, नेः, भेदा मता इत्येव; कैशिकिकाकलिमृदुसा निषादस्य भेदा इत्यर्थः ॥ -३, ४ ॥

मृदुममृदुपमृदुसानां मध्यमपञ्चमषड्जभेदत्वप्रतीतिं निराकरोति—

**उक्ता मृदुमो गभिदा मृदुमो मभिदा च नेर्भिदा मृदुसः।**
**पूर्वान्पञ्चदशभ्यः स्वरान्ब्रुवे भेदभेदकरान् ॥ ५ ॥**
**तीव्ररिमुखत्रयात्सः साधारणमुखचतुष्टयादृषभः।**
**स्याद्गस्तीव्रतममुखयुगलात्तीव्रधमुखत्रयतः ॥ ६ ॥**
**पूर्वं पञ्चम उक्तः कैशिक्यादेस्त्रिकाच्च धः शुचिवत्।**
**एवं यथा तथैते भिद्भ्यः पूर्वं स्वरा नियताः ॥ ७ ॥**

उक्तेति। मृदुमो गभिदा गान्धारस्यैव भेदः, तथा मृदुपो मभिदा मध्यमस्यैव भेदः, मृदुसश्च नेर्भिदा निषादस्यैव भेदः, उक्ता कथितैव प्रथमविवेके 'निगमा मृदुपरसमपाः' इत्यार्यया। अत्र मृदुमादिसंज्ञाकरणं तु च्युतमध्य-

मादिप्राचीनसंज्ञानुसारेण । इदानीं तीव्रतररितीव्रतमयोः शुद्धगसाधारणाभ्याम्, तीव्रतमगस्य शुद्धमध्यमेन, तीव्रतरधतीव्रतमधयोः शुद्धनिकैशिकिनिभ्यां च सहैक्याद्भेदपञ्चदशकत्वहानौ प्राप्तायां तत्संख्यास्थापनाय भेदपञ्चदशकात्पूर्वान्नियतस्वरान्वक्तुं प्रतिजानीते—पूर्वान्पञ्चदशभ्यः स्वरान्ब्रुवे भेदभेदकरानिति। भेदानां यो भेदस्तत्करान्। शिष्टं स्पष्टम्। तानेवाह—तीव्ररिमुखत्रयादिति सार्धयार्यया। तीव्ररिमुखात्त्रयात्पूर्वं सः; तीव्ररितीव्रतररितीव्रतमरिभ्यः पूर्वं प्रत्येकं षड्ज एव भवतीत्यर्थः। किंवत्? शुचिवत्, शुचिना शुद्धेन तुल्यम्; यथा शुद्धऋषभात्पूर्वं सः, तथैभ्योऽपीत्यर्थः। शुचिवदित्यन्त उक्तमपि सर्ववाक्यशेषत्वात्सर्वत्र संबध्यते। साधारणमुखचतुष्टयात्पूर्वमृषभः; साधारणान्तरमृदुमतीव्रतमगेभ्यः पूर्वमृषभ एव भवेत्। तीव्रतममुखयुगलात्पूर्वं गः स्यात्; तीव्रतममृदुपाभ्यां पूर्वं गान्धार एव भवति। तीव्रधमुखत्रयतस्तीव्रधतीव्रतरधतीव्रतमधेभ्यः पूर्वं पञ्चम उक्तः कथितः। कैशिक्यादेस्त्रिकात्कैशिकिकाकलीमृदुसेभ्यश्च पूर्वं धो धैवतः। पूर्वमिति मध्य उक्तमपि सर्वत्र संबध्यते। निगमयति—एवमिति। एवमेते षड्जादयः, यथातथा स्वस्वश्रुतिस्थाः परश्रुतिस्था अन्यभेदान्तर्गता वा भिद्भ्यो भेदेभ्यः पूर्वं नियता निश्चितं भवन्ति। ततश्च केषांचिदेकश्रुतिस्थतया ध्वनिसाम्येऽपि तत्तत्पूर्वस्वरकृतो मेलेषु भेद इति भावः ॥ ६–७ ॥

अथ पूर्वोक्तां मेलसंख्यां साधयति एकद्वित्रीत्यार्यया—

एकद्वित्रिचतुः पञ्चभिदास्तिथयोऽङ्ककरि च भूरसदृक्।
गजगिरिगुणाश्च नृपदृक् क्रमतो मेला अभिच्चेन्दुः ॥ ८ ॥

एकेति। एकद्वित्रिचतुःपञ्चभिदाः, एका द्वे तिस्रश्चतस्रः पञ्च भिदा भेदा येषु ते मेलाः क्रमतस्तिथय इत्यादिकाः, स्युरिति शेषः। तत्रैकैकभेदा मेलास्तिथयः (१५) पञ्चदश, द्विद्विभेदा अङ्ककरि (८९) चैकोना नवतिः, त्रित्रिभेदा भूरसदृक् (२६१) एकषष्ट्यधिकं शतद्वयम, चतुश्चतुर्भेदा गजगिरिगुणाश्च (३७८) अष्टसप्तत्यधिकं शतत्रयम्, पञ्चपञ्चभेदा मेला नृपदृक् (२१६) षोडशाधिकं शतद्वयम, अभिद्भेदरहितः, शुद्धसप्तस्वर इति यावत्,

स इन्दुः (१) एकश्च। एवं मिलिताः स्वरसाङ्काः (९६०) मेला इत्यर्थः। षड्जपञ्चमयोरविकृतत्वात्षड्भेदसप्तभेदासंभवः। अत्र त्रयश्चशब्दा द्वयोर्द्वयोः समुच्चये। अङ्ककरि, भूरसदृक्, नृपदृक् इति च समाहारद्वंद्वः॥ ८॥

उक्तप्रत्ययार्थं संख्याज्ञानोपायादीन्वक्तुकामः पञ्चदशानां भेदानां लाघवाय संज्ञान्तराण्याह—

पञ्चदशैते भेदा एकाद्यङ्काभिधा ब्रुवेंऽशाङ्कान्।
संख्याहेतूनेकाद्यद्व्याद्यप्रमुखमेलदिशः॥ ९॥

पञ्चदशेति। पञ्चदशैते तीव्ररिप्रमुखा भेदा एकाद्यङ्काभिधा एकादयोऽङ्कास्तेऽभिधा नाम येषां तादृशाः, ज्ञेया इति शेषः। तत्र तीव्ररेः संज्ञैकाङ्कः, तीव्रतररेर्द्व्यङ्क इत्यादि पञ्चदशाङ्कपर्यन्तं संज्ञाः। अथ पञ्चदशैकोननवत्यादिसंख्यानां साधकांस्तीव्रर्याद्यतीव्रतर्यादिमेलानां बोधकांस्तत्तत्संख्यावयवभूतानङ्कान्वक्तुं प्रतिजानीते—ब्रुवेंऽशाङ्कानिति। स्पष्टम्। कीदृशान्? संख्याहेतून्, यैर्मिलितैः पञ्चदशादय एकान्ता मेलसंख्याः साध्यन्ते, तथा, एकाद्यद्व्याद्यप्रमुखमेलदिशः, एकस्तीव्ररिराद्यो भेदेषु प्रथमो येषां मेलानां त एकाद्याः, द्वौ नाम तीव्रतररिराद्यो भेदेषु प्रथमो येषां मेलानां ते द्व्याद्याः, ते प्रमुखा येषां तीव्रतमर्याद्यसाधारणाद्यादिमेलानां तान्दिशन्ति बोधयन्तीति तद्दिशः। यैरंशाङ्कैस्तीव्रर्याद्यतीव्रतर्याद्यादयो मेला एतावन्त इति ज्ञायन्त इत्यर्थः॥ ९॥

तानेवांशाङ्कानाह—

एकभिदां पञ्चार्हा एकाङ्काः पञ्चदश ततो द्विभिदाम्।
रवयस्त्रिधा चतुर्धा त्विभा द्विधा षट् त्रिधा रामाः॥ १०॥
त्रिभिदां त्रिधाग्निबाणाः कुदृक् चतुर्धा नव द्विधा गदिताः।
त्रेधा चतुर्भिदां दृग्दशश्चतुर्धा गजक्षितयः॥ ११॥
पञ्चभिदां दृग्गिरयस्त्रिधेति यदि पूर्वपूर्वसंख्योना।
सस्थानैः स्वैरङ्कैस्तज्जनयेत्परपरांशाङ्कान्॥ १२॥

एकभिदामिति । एकैकभेदवतां मेलानां पञ्चदशैकाङ्का अंशाङ्काः । मेलानामंशाङ्का इति च शेषः सर्वत्र । कीदृशाः ? पञ्चार्हाः, त्रिचतुर्द्वित्रित्रिभेदवतां रिगमधनीनामर्हा योग्याः । तेन प्रथमरेखात्रिष्वेकाङ्केऽवच्छेदः, ततो गस्य चतुर्षु, ततो मस्य द्वयोः, ततो धस्य त्रिषु, ततो नेस्त्रिषु । एवमुत्तरत्रापि । ततश्च पञ्चदशभिरेकाङ्कैः पञ्चदशसंख्या साध्यते । ततो द्विभिदां द्विद्विभेदवतां मेलानामंशाङ्कास्त्रिधा रवयः (१२) त्रिस्थानस्था द्वादश । चतुर्धा त्विभाः (८) चतुःस्थानस्था अष्टौ । द्विधा स्थानद्वयस्थाः षट् । त्रिधा रामाः (३) स्थानत्रयस्थास्त्रयः । ततश्चैवं द्वादशभिरंशाङ्कैरेकोननवतिसंख्या साध्यते । त्रिभिदां त्रित्रिभेदवतां मेलानामंशाङ्कास्त्रिधा अग्नित्राणाः (५३) स्थानत्रयस्थास्त्रिपञ्चाशत् । चतुर्धा कुदृक् (२१) स्थानचतुष्टयस्था एकविंशतिः । द्विधा स्थानद्वयस्था नव । गदिता उक्ताः । गदिता इति सर्वत्र क्रियापदम् । ततश्चेति नवभिरंशाङ्कैरेकषष्ट्यधिकशतद्वयसंख्या साध्यते । कुदृगिति समाहारद्वंद्वः । चतुर्भिदां चतुश्चतुर्भेदवतां मेलानामंशाङ्कास्त्रेधा दृग्दिशः (१०२) स्थानत्रयस्य द्व्यधिकं शतम् । चतुर्धा गजक्षितयः (१८) स्थानचतुष्टयस्था अष्टादश । ततश्चेभि. सप्तभिरंशाङ्कैरष्टसप्तत्यधिकशतत्रयसंख्या साध्यते । पञ्चभिदां पञ्चपञ्चभेदवतां मेलानामंशाङ्कास्त्रिधा दृग्गिरयः (७२) स्थानत्रयस्था द्विसप्ततिः । ततश्चैभिस्त्रिभिरंशाङ्कैः षोडशाधिकशतद्वयसंख्या साध्यते । इतिशब्दः प्रकारे । एवंप्रकारास्त इत्यर्थः । एवं पञ्चविधानां मेलानामंशाङ्कैरुत्तरोत्तरमधोऽधो निषादभेदा निषादधैवतभेदा निषादधैवतमध्यमभेदा निषादधैवतमध्यमगान्धारभेदाश्च हीयन्ते । तेऽङ्कतो यथा । इदानीं विश्वासायांशाङ्कानामुत्पत्तिमाह—यदि पूर्वपूर्वसंख्येति । यदि पूर्वपूर्वसंख्या प्रथमप्रथमसंख्या सस्थानैस्त्रिचतुरादिस्थानसंख्यासहितैः स्वैरङ्कैरंशाङ्करूना हीयेत, तर्हि परपरांशकाञ्जनयेत् । तद्यथा—भेदपञ्चदशमूलैः पञ्चदशभिरेकाङ्कैः साधितायां पञ्चदशसंख्यायामूर्ध्वतस्त्रिष्वेकांशेषु न्यूनेषु जाता द्वादश । तेष्वपि चतुर्षु तेषु न्यूनेषु जाता अष्टौ । तेष्वपि द्वयोस्तयोर्न्यूनयोर्जाता षट् । तेष्वपि त्रिषु तेषु न्यूनेषु जातास्त्रयः । तेष्वपि त्रिषु तेषु न्यूनेषु जातं शून्यम् । एवं ते क्रमेण

यथार्हं त्रिस्थानस्थाः सन्तो द्विभेदसंख्याया अंशाङ्काः संपद्यन्ते । तस्यां चैकोन-नवतिसंख्यायामूर्ध्वतस्त्रिषु द्वादशाङ्केषु न्यूनेषु जातास्त्रिपञ्चाशत् । तस्यामपि चतुर्ष्वष्टाङ्केषु न्यूनेषु जातैकविंशतिः । तस्यामपि द्वयोः षडङ्कयोर्न्यूनयोर्जाता नव । तेष्वपि त्रिषु त्र्यङ्केषु न्यूनेषु स्थितं शून्यम् । एवं तेऽपि क्रमेण यथार्हं त्रिचतुर्द्विस्थानस्थाः सन्तस्त्रिभेदसंख्याया अंशाङ्काः संपद्यन्ते । तस्यां चैकषष्ट्य-धिकशतद्वयसंख्यायां पूर्ववत्त्रिषु त्रिपञ्चाशदङ्केषु न्यूनेषु जातं द्व्यधिकं शतम् । तस्मिंश्च चतुर्ष्वेकविंशत्यङ्केषु न्यूनेषु जाता अष्टादश । तेष्वपि द्वयोर्नवाङ्कयो-र्न्यूनयोः स्थितं शून्यम् । एवं तेऽपि क्रमेण यथार्हं त्रिचतु:स्थाः सन्तश्चतुर्भेद-संख्याया अंशाङ्काः संपद्यन्ते । तस्यां चाष्टसप्तत्यधिकशतत्रयसंख्यायां त्रिषु द्व्यधिकशताङ्केषु न्यूनेषु जाता द्विसप्ततिः । तस्यां च चतुर्ष्वष्टादशाङ्केषु न्यूनेषु स्थितं शून्यम् । एवमेकभेदादिमेलांशाङ्कोत्पत्तिः । तत्र पञ्चदशमितेष्वेकभेदेषु तीव्रर्याद्यस्तीव्रतरर्याद्यस्तत्प्रमुखाद्याश्चैकैक एव मेलः । एकोननवतिमितेषु द्विभेदेषु तीव्रर्याद्या मेला द्वादश । तीव्रतरर्याद्या द्वादश । तीव्रतमर्याद्याश्च द्वादश । साधारणाद्या अष्टौ । अन्तराद्या अष्टौ । मृदुमाद्या अष्टौ । तीव्रतमगाद्याश्चाष्टौ । तीव्रतममाद्याः षट् । तीव्रधाद्यास्त्रयः । तीव्रतरधाद्यास्त्रयः । तीव्रतमधाद्यास्त्रयः । कैशिक्याद्या न संभवन्ति, निषादात्परस्य भेदवतो द्वितीयस्याभावात् । एक-षष्ट्यधिकशतद्वयमितेषु त्रिभेदेषु तु तीव्रर्याद्या मेलास्त्रिपञ्चाशत् । तीव्रतरर्याद्या-स्त्रिपञ्चाशत् । तीव्रतमर्याद्यास्त्रिपञ्चाशत् । साधारणाद्या एकविंशतिः । अन्तराद्या एकविंशतिः । मृदुमाद्या एकविंशतिः । तीव्रतमगाद्याश्चैकविंशतिः । तीव्रतममाद्या नव । मृदुपाद्याश्च नव । तीव्रधाद्यप्रमुखानां त्वसंभवः, धैवतनिषादाभ्यां परस्य भेदवतस्तृतीयस्याभावात् । अष्टसप्तत्यधिकशतत्रयमितेषु चतुर्भेदेषु तु तीव्रर्याद्या मेलाद्व्यधिकं शतम् । तीव्रतमर्याद्याश्च द्व्यधिकं शतम् । साधारणाद्या अष्टादश । अन्तराद्या अष्टादश । तीव्रतमगाद्याश्चाष्टादश । तीव्रतममादीनां त्वसंभवः, मध्यम-धैवतनिषादेभ्यः परस्य भेदवतश्चतुर्थस्याभावात् । षोडशाधिकशतद्वयमितेषु तु पञ्चभेदेषु तीव्रर्याद्या द्विसप्ततिः । तीव्रतरर्याद्या द्विसप्ततिः । तीव्रतमर्याद्याश्च द्विसप्ततिः । साधारणाद्यादीनां त्वसंभवः, गान्धारमध्यमधैवतनिषादेभ्यः परस्य भेदवतः पञ्चमस्वरस्याभावात् ॥ १०–१२ ॥

अथ प्रत्ययदार्ढ्याय प्रस्तारादि कथयिष्यंस्तन्मूलभूतां पञ्चविधां भेदक्रमपङ्क्तिमाह—

एकश्चत्वारोऽष्टौ दश त्रयोदश च मूलपङ्क्तिः सा ।
न्यस्या प्रस्तारार्थं सैवैकैकाधिकान्ते च ॥ १३ ॥
तिथ्यङ्कादा चाधोऽध उपान्त्ये सैकिताखिलाधःस्था ।
अग्रे मूलाङ्कवती पङ्क्तिरधः प्रागिवाधोऽधः ॥ १४ ॥
सैको ऽन्त्य इति प्राग्वदुपान्त्ये द्वादशाङ्केऽध स्था ।
अन्त्यात्तृतीय एक द्व्यग्रे मूलाङ्कवत्येव ॥ १५ ॥
पूर्ववदखिलं भूयोऽधःस्थान्त्यतृतीयगे नवाङ्के तु ।
सैकान्त्यतुरीयेऽग्रे मूलाङ्कवती पुनः प्राग्वत् ॥ १६ ॥
सप्ताङ्केऽन्त्याच्चतुर्थेऽधःपङ्क्तिस्त्वन्त्यपञ्चमे सैका ।
शेषं पूर्ववदेवं प्रस्तारो द्व्यादिभेदानाम् ॥ १७ ॥

एक इति । एकश्चत्वारोऽष्टौ दश त्रयोदश च मूलपङ्क्तिः ; रिगमधनीनां प्रथमप्रथमभेदक्रममय्येव मूलभूता पङ्क्तिः, तेषां तीव्रतरयादिद्वितीयादिभेदानां तु युगपत्सहावस्थानासंभवादित्यर्थः । तत्रैकभेदानामेक इति, द्विभेदानामेकश्चत्वार इति, त्रिभेदानामेकश्चत्वारोऽष्टाविति, चतुर्भेदानामेकश्चत्वारोऽष्टौ दशेति, पञ्चभेदानामेकश्चत्वारोऽष्टौ दश त्रयोदशेति च यथायथं मूलपङ्क्तयो बोद्धव्याः । प्रस्तारमाहैकाक्षराधिकार्धसहितचतसृभिरार्याभिः—सान्यस्येति । सा मूलपङ्क्तिः प्रस्तारार्थं न्यस्या, आदावूर्ध्वं लेख्या । च पुनः सैव लिखिता पङ्क्तिरेव, अन्तेऽन्त्याङ्क एकैकाधिकाधोऽधो लिखितव्या । न्यस्येति सर्वत्र । अभिविधिमाह—तिथ्यङ्कादा चेति । यावत्पञ्चदशाङ्को भवेत्तावल्लेख्येत्यर्थः । अखिलाधःस्थान्त्या पञ्चदशाङ्का पङ्क्तिः, उपान्त्ये सैकिता, अन्त्यात्पूर्वेऽङ्के सैका कृता । तथाग्रे पञ्चदशाङ्कस्थाने मूलाङ्कवती तत्स्थानोचितमूलपङ्क्त्यङ्कयुक्ता सत्यधो न्यस्या । अधोऽधः प्रागिव न्यस्या, पूर्ववल्लिखितपङ्क्तिरेवान्ते सैका सती पञ्चदशाङ्कपर्यन्तं लेख्येत्यर्थः । उपान्त्ये सैका, इति, इत्यादिकक्रिया,

प्राग्वत् पञ्चदशाङ्कपङ्क्तिः, उपान्त्ये पुनः सैका, अग्रे मूलाङ्कवती, अधः सैवान्ते सैकसैका पञ्चदशाङ्कपर्यन्तमिति पूर्ववदित्यर्थः। द्वादशाङ्क उपान्त्ये सति, अधःस्था पञ्चदशाङ्कपङ्क्तिः, अन्त्यात्तृतीये, उपान्त्यात्पूर्वाङ्के, एकाद्या सैका। तथाग्रे द्वादशाङ्कपञ्चदशाङ्कयोर्मूलाङ्कवत्येव तत्स्थानोचितमूलपङ्क्त्यङ्क-द्वययुक्तैवाधो लेख्येत्यर्थः। भूयः पुनरपि, अखिलं पूर्ववत्, आ पञ्चदशभ्यो-ऽन्तेऽन्ते सैककरणमग्रे मूलाङ्ककरणमित्यादि च वारं वारं पूर्ववत्कार्यमित्यर्थः। अधःस्था पञ्चदशाङ्कपङ्क्तिः, नवाङ्के त्वन्त्यतृतीयगेऽन्त्यात्तृतीयस्थाने सति, अन्त्यतुरीयेऽन्त्याच्चतुर्थाङ्के सैका, अग्रे नवद्वादशपञ्चदशाङ्केषु मूलाङ्कवती तत्स्थानत्रयोचितमूलपङ्क्त्यङ्कत्रययुक्ता च सती, अधो लेख्येत्यर्थः। पुनः प्राग्वत्। आ पञ्चदशभ्योऽन्तेऽन्ते सैककरणमुपान्त्ये च सैककरणमित्यादि पूर्ववदेव कार्यमित्यर्थः। अधःपङ्क्तिः पञ्चदशाङ्कपङ्क्तिस्तु, सप्ताङ्केऽन्त्याच्चतुर्थे चतुर्थे सति, अन्त्यपञ्चमेऽन्त्यात्पञ्चमाङ्के सैका। शेषं पूर्ववत्। सप्तनव-द्वादशपञ्चदशाङ्केषु मूलपङ्क्तिवच्चतुरष्टदशत्रयोदशाङ्ककरणम्, अन्तेऽन्ते सैक-करणादि, उपान्त्ये सैककरणादि, अन्त्यतृतीये सैककरणादि, अन्त्यचतुर्थे च सैककरणादि च कर्म, यावदन्त्यात्पञ्चमस्त्र्यङ्को भवति तावत्कार्यमित्यर्थः। प्रस्तारं निगमयति—प्रस्तार इति। द्व्यादिभेदानामेवं प्रस्तारः। एकभेदप्रस्तारो निगमनविशेषाभावान्नोक्तः। तत्र द्विभेदप्रस्तारे मूलपङ्क्तिः १, ४। अन्त्य-पङ्क्तिः १२, १५। त्रिभेदप्रस्तारे मूलपङ्क्तिः १, ४, ८। अन्त्यपङ्क्तिः ९, १२, १५। चतुर्भेदप्रस्तारे मूलपङ्क्तिः १, ४, ८, १०। अन्त्यपङ्क्तिः ७, ९, १२, १५। पञ्चभेदप्रस्तारे मूलपङ्क्तिः १, ४, ८, १०, १३। अन्त्यपङ्क्तिः ३, ७, ९, १२, १५। तत्तद्भेदप्रस्तारोदाहरणानि यथा—

अथ त्रिभेदप्रस्तारे तीव्रर्याद्या मेलास्त्रिपञ्चाशत; तीव्रतरर्याद्या मेलास्ता-वन्त एव; तीव्रतमर्याद्या मेला अपि तावन्त एव; साधारणाद्या मेला एकविं-शतिः; अन्तराद्यास्तावन्त एव; मृदुमाद्यास्तावन्त एव; तीव्रतमगाद्या अपि तावन्त एव; तीव्रतममाद्या नव; मृदुपाद्याश्च मेला नवेति ज्ञेयम्। एवं शेष-प्रस्तारा अपि बोद्धव्याः॥ १३–१७॥ इति प्रस्तारः।

अथ नष्टमार्याचतुष्टयेनाह—

नष्टाङ्के स्वांशाङ्काः पात्या एकाद्यमुखदिशो लेख्या ।
पङ्क्तिः शेषभिदाद्या मूलाख्या त्वन्यथैकाद्या ॥ १८ ॥

नष्टाङ्क इति । नष्टाङ्के नष्टप्रश्नसंख्यायाम्, स्वांशाङ्काः, यज्जातीयं नष्टं तदंशाङ्काः, ऊर्ध्वतः सकृत्सकृत्पात्या न्यूनाः कार्याः । ऊर्ध्वत इति शेषः । सकृत्सकृदित्यग्रे वक्ष्यमाणमिहाप्याकर्षणीयम् । कीदृशास्ते? एकाद्यमुखदिशः, एकाद्यस्तीव्रर्याद्यमेलो मुखमादिर्येषां तीव्रतर्यादीनां तान्दिशन्ति कथयन्ति ते तादृशाः, यैरंशाङ्कैर्द्विभेदादिमेलसंख्यासु तीव्रर्याद्यप्रमुखा मेला ज्ञायन्त इत्यर्थः । ततः परं कर्तव्यमाह—लेख्येति । मूलाख्या पङ्क्तिर्मूलपङ्क्तिः, शेषभिदाद्या लेख्या, ये पातितास्तीव्रर्याद्यमेलबोधका अंशाङ्कास्तेभ्यः परं शेषा या भिदा पञ्चदशान्यतमो भेदः, स आद्यः प्रथमो यस्या एवंविधा सती लेख्या । तं भेदमादौ लिखित्वाग्रे चत्वारोऽष्टौ दश त्रयोदशेति यथासंभवं लेख्येत्यर्थः । यत्र स्वांशाङ्कः प्रथमो न पतति तत्र मूलपङ्क्तेर्लिखने विशेषमाह—त्वन्यथेति । अन्यथा तु, एकाद्या लेख्येत्येव । एकश्चत्वार इत्यादिका शुद्धैव मूलपङ्क्तिर्लेख्येत्यर्थः ॥ १८ ॥

ततः परं कर्तव्यमाह—

प्राच्यप्राच्यांशाङ्कैः शेषं शेषं सकृत्सकृद्धाज्यम् ।
दृष्टभिदोऽधोऽधःस्थैरप्रथमैर्लब्धयोग्यर्हैः ॥ १९ ॥

प्राच्येति । प्राच्यप्राच्यांशाङ्कैः, यज्जातीयं नष्टं पञ्चभेदचतुर्भेदादिस्थं ततः पूर्वे पूर्वे ये चतुर्भेदत्रिभेदादीनामंशाङ्कास्तैः शेषं शेषं सकृत्सकृद्धाज्यम्, एकैकवारमेव हरणीयम् । कीदृशैस्तैः? दृष्टभिदस्तादृशमूलपङ्क्तौ दृष्टात्साधारणादिभेदादधोऽधःस्थैः । तत्र हेतुमाह—अप्रथमैस्त्रिस्थोर्ध्वाङ्कव्यतिरिक्तैः । साधारणाद्यधःस्थेष्वपि विशेषमाह—लब्धयोग्यर्हैः, वक्ष्यमाणलब्धस्य योगो योजनं तदस्यास्तीति लब्धयोगी मूलपङ्क्तिस्थभेदः, तस्यार्हैस्तज्जातीयैः साधा-

रणाद्यंशाङ्कैर्भाजनसंभवेऽपि चेल्लब्धं मूलपङ्क्तौ तीव्रतमर्यादिभिर्योज्यते तर्हि तीव्रतममाद्याधोऽधःस्थैरित्यर्थः ॥ १९ ॥

यत्र निःशेषमंशाङ्कपतनं शेषं रक्षणीयम्; तदपि च सविशेषमित्याह—

रक्ष्यं तथैव शेषं यथा तु तद्योगतोऽन्तिमे न भवेत् ।
समतोनता च पूर्वेणैकस्वरभेदतावसितौ ॥ २० ॥
क्रमतोऽन्त्यात्तुर्यादिषु लब्धं योज्यं चतुर्भिदादिभवैः ।
भागेऽंशाङ्कैरन्ते शेषं कृत्वा तथैकोनम् ॥ २१ ॥

रक्ष्यमिति । शेषं तथा रक्ष्यमेव रक्षणीयमेव । एवशब्दो भिन्नक्रमः । यथा तु येन प्रकारेण त्वन्तिमे मूलाङ्कपङ्क्तेरन्त्याङ्के तद्योगतो वक्ष्यमाणेनैकोन-शेषयोगेन, अवसितावदसाने, अन्त इति यावत्; पूर्वेण समतोनतैकस्वरभेदता च न भवेत्, एकोनशेषस्यान्त्याङ्के मेलने यथान्त्यभेदः पूर्वभेदेन सहाभिन्न-स्ततो न्यूनो वा पूर्वभेदो यस्य स्वरस्य तस्यैव भेदो वा न स्यात्, तथा विचार्य शेषं रक्षणीयम् । अन्यथा अशास्त्रीयता स्यादिति भावः । मूलाङ्क-पङ्क्तेरन्त्याङ्कात्पूर्वेष्वप्येवमेव समतोनतेत्यादि विचार्य लब्धमात्रयोगो ज्ञेयः ॥ एवमंशाङ्कैः सकृत्सकृद्भाज एकैकाङ्करूपस्य लब्धस्य योगे योग्यान्मूलपङ्क्तिभेदा-नाह—क्रमत इति । चतुर्भेदादिभवैरंशाङ्कैर्भागे यल्लब्धं तत्क्रमतोऽन्त्यात्तुर्यादिषु योज्यम् । पञ्चभेदनष्टे चतुर्भेदांशाङ्कैर्भाजने लब्धा एकाङ्का एकीकृत्य तन्मूल-पङ्क्तेरन्त्याच्चतुर्थे योज्याः । त्रिभेदांशाङ्कैर्मूलपङ्क्तेरन्त्यात्तृतीये योज्याः । द्विभे-दांशाङ्कैर्मूलपङ्क्तेरन्त्याद्द्वितीये योज्याः । चतुर्भेदनष्टे त्रिभेदांशाङ्कैर्भाजने लब्धा एकाङ्कास्तन्मूलपङ्क्तेरन्त्यात्तृतीये योज्याः । द्विभेदांशाङ्कैर्मूलपङ्क्तेरन्त्याद्द्वितीये योज्याः । त्रिभेदनष्टे द्विभेदांशाङ्कैर्भाजने लब्धा एकाङ्कास्तन्मूलपङ्क्तेरन्त्या-द्द्वितीये योज्याः । द्विभेदनष्टे एकभेदांशाङ्कैर्भाजने लब्धा एकाङ्कास्तन्मूलपङ्क्ते-रन्त्याङ्क एव योज्या इत्यर्थः । ततः परं कर्तव्यमाह—अन्त इति । शेषं सर्वावशिष्टमेकेनोनं कृत्वान्ते मूलपङ्क्तेरन्त्याङ्के योज्यम् । तथा चार्थे । च परम् । आद्यतो यत्र स्वांशाङ्कपातो न संभवति तदप्यङ्कजातमेकोनं कृत्वा

पूर्ववदन्ते योज्यम्। तत एतादृशो नष्टमेल इति कथनीयम्। अत्रोदाहरणम्— त्रिभेदमेलप्रस्तारे पञ्चपञ्चाशदधिकशतस्य (१५५) पूरणं मेलरूपं कीदृशमिति प्रश्ने तत्संख्यायाः प्रथमः स्वांशाङ्कस्तीव्रर्याद्यमेलबोधकस्त्रिपञ्चाशदङ्करूपः (५३) पात्यते। शेषं द्व्यधिकशतम् (१०२)। तस्मिन्नपि द्वितीयः स्वांशाङ्कस्तीव्रतर्याद्यमेलबोधकस्त्रिपञ्चाशदङ्करूप (५३) एव पुनः पात्यते। शेषमेकोनपञ्चाशत् (४९)। ततः शेषभिदाद्या त्रयश्चत्वारोऽष्टौ च (३, ४, ८) इति मूलपङ्क्तिर्लिख्यते। ततोऽप्रथमैर्द्वादशाङ्कव्यतिरिक्तैर्दृष्टभिदो मूलपङ्क्तौ दृष्टस्य चतुरङ्करूपसाधारणस्य भेदात् ऊर्ध्वादृष्टाङ्कादधोऽधःस्थैस्त्रिभिरन्तरादीनामष्टाङ्कैर्द्वाभ्यां तीव्रतमममृदुपयोः षडङ्काभ्यां तीव्रधतीव्रतरधयोर्द्वाभ्यां त्र्यङ्काभ्यां चैकोनपञ्चाशद्रूपे (४९) शेषे सकृत्सकृद्भाजिते सर्वशेषं सप्ताङ्कः (७)। लब्धा अपि सप्तैकाङ्काः मूलपङ्क्तेरन्त्याद् द्वितीये चतुरङ्के योज्यन्ते। शेषः सप्ताङ्कस्त्वेकोनषडङ्करूपः सन्नन्ते मूलपङ्क्तेरष्टाङ्के योज्यते। ततश्च त्रय एकादशं चतुर्दश च (३, ११, १४) इति नष्टमेलरूपं कथनीयम्। अत्र द्वाभ्यामेव त्र्यङ्काभ्यां भागो युक्तः। त्रिभिस्त्र्यङ्कैश्चेद्भागो गृह्येत तर्हि सर्वशेषं चतुरङ्कः स्यात्, लब्धाश्चाष्टावेकाङ्काः स्युः। ततश्च पूर्ववद्योजने क्रियमाणे त्रयो द्वादशैकादश च (३, १२, ११) इति क्रमहानेरशास्त्रीयता प्रसज्यते। ततस्तथा शेषं नैव स्थाप्यम्। अन्यद् द्व्यादिभेदप्रस्तारनष्टमप्येवमेव ज्ञेयम्॥ २१॥

अथोद्दिष्टं द्वाभ्यामाह—

यद्भेदाद्युद्दिष्टं तद्भेदाद्येव मूलमुन्नेयम्।
एकाङ्कैर्यावद्भिर्मूलादूर्ध्वाभिदा अस्यं॥ २२॥
प्राच्यप्राच्यांशाङ्कास्तावन्तो नष्टवत्तु लभ्येरन्।
शेषैः स्वांशाङ्कैः सह लब्धैक्ये सैकमुद्दिष्टम्॥ २३॥

यद्भेदादीति। उद्दिष्टमुद्दिष्टस्वरूपं सत्संख्याविषयत्वेनेष्टं मेलरूपम्, यद्भेदादि, यो भेद आदिर्यस्य तादृशम्, वर्तत इति शेषः; तद्भेदाद्येव, स भेद आदिर्यस्यैतादृशमेव मूलमुल्लेख्यमूर्ध्वं लेखनीयम्। मूलपङ्क्तिरप्युद्दिष्टप्रथमभेदादिः सत्युद्दिष्टपङ्क्तेरूर्ध्वं लेखनीयेत्यर्थः। ततः किम्? तत्राह—एकाङ्कैरिति। अस्यो-

द्दिष्टपङ्क्तिरूपस्य भिदाः साधारणाद्यन्यतमभेदा मूलान्मूलपङ्क्तेः साधारणादिभेदेभ्यो यावद्भिरेकाङ्कैर्वृद्धा अधिकाः, तावन्तः प्राच्यप्राच्यांशाङ्काः, लभ्येरन् लब्धा भवेयुः कथम्? नष्टवन्नष्टेन तुल्यम्। ततश्च पञ्चभेदादिक उद्दिष्टे मूलपङ्क्तेरन्त्यचतुर्थादिभ्यो यावन्त एकाङ्का उद्दिष्टस्यान्त्यचतुर्थादिष्वधिकाः, तावन्त एव चतुर्भेदादीनामंशाङ्का अप्रथमा लब्धयोग्याहाश्च क्रमेण लभ्यन्ते। ततः परं कर्तव्यमाह—शेषैरिति। शेषैः स्वांशाङ्कैः सहोद्दिष्टाद्यो यो भेदः, ततः पूर्वे ये भेदाः, तद्बोधकैरंशाङ्कैः सार्धं लब्धैक्ये लब्धानां प्राच्यप्राच्यांशानामेकीकरणे सति, उद्दिष्टम्, भवेदिति शेषः। कीदृशम्? सैकम्, अन्ते पुनरेकेन सहितम्। अत्रोदाहरणम्—त्रिभेदप्रस्तारे त्रय एकादश चतुर्दशेति (३, ११, १४) मेलरूपं कतिधमिति संख्याप्रश्ने, उद्दिष्टस्य त्र्यङ्कात्मकत्वान्मूलपङ्क्तिरपि त्र्यङ्काद्येवम् (३, ४, ८) उद्दिष्टपङ्क्तेरूर्ध्वं लिख्यते। ततश्च मूलपङ्क्तेरन्त्यद्वितीयचतुरङ्कापेक्षयोद्दिष्टपङ्क्तेरन्त्यद्वितीय एकादशाङ्कः सप्तभिरेकाङ्कैरधिक इति सप्तैव द्वितीयभेदांशाङ्का नष्टवद् द्वादशव्यतिरिक्ता दृष्टभेदादूर्ध्वादिष्टाङ्कादधोऽधःस्थाः अष्टाष्टाष्ट षट्षट् त्रयस्त्रय इति लब्धाः सप्तैव। तथा मूलपङ्क्तेरन्त्याष्टाङ्कापेक्षयोद्दिष्टपङ्क्तेरन्त्यश्चतुर्दशाङ्कः षड्भिरेकाङ्कैरधिक इति षडपि लब्धाः। तथोद्दिष्टाद्यो भेदस्त्र्यङ्कः, ततः पूर्वौ तीव्रर्याद्यतीव्रतरर्याद्यबोधकौ त्रिपञ्चाशदङ्कौ। ताभ्यां सह सर्वेषां लब्धानामैक्ये सति, अन्ते पुनरेकेन सहितत्वे च सति पञ्चपञ्चाशदधिकशतं संपद्यते। ततस्त्रय एकादशेति मेलस्वरूपं पञ्चपञ्चाशदधिकशतस्य पूरणं कथनीयम्। एवं शेषमेलोद्दिष्टानि ज्ञेयानि ॥ २२, २३ ॥

अथ षष्ट्यधिकनवशतीमितमेलेषु पञ्चोत्तरं शतमशास्त्रीयत्वात्त्याजयति—

**एकश्रुतिस्थभेदद्वयानिषुदिशस्त्यजेदिह तु मेलान्।**
**क्रमसपुनरुक्तिकूटवदुक्तान्प्रस्तारसिद्ध्यर्थम् ॥ २४ ॥**

एकश्रुतिस्थेति। इह त्वेषु मेलेषु तु, इषुदिशः (१०५) मेलांस्त्यजेत्, अशास्त्रीयत्वादिति शेषः। तत्र हेतुगर्भं विशेषणमाह—कीदृशान्? एकश्रुतिस्थान्यभिन्नश्रुतौ वर्तमानानि भेदद्वयानि तीव्रतमरिसाधारणरूपाणि (३, ४)

तीव्रतमधकैशिकिरूपाणि च (१२, १३) येषु तान्। इह येभ्यो भेदेभ्यः पूर्वस्थाने यथासंभवं षड्जादयः स्वस्वश्रुतिस्थाः परश्रुतिस्था वान्यभेदैरन्तर्गिलिता वा संभवन्ति, तद्भेदवन्तो मेलाः शास्त्रीया अन्ये त्वशास्त्रीयाः। ततश्च मस्य प्रथमश्रुतिस्थात्तीव्रतमरेः पूर्वं षड्जे संभवत्यपि तदैव मस्य प्रथमश्रुतिस्थादेव साधारणात्पूर्वमृषभस्यासंभव इति तयोः सहावस्थानेऽशास्त्रीयत्वम्। एवं षड्जप्रथमश्रुतिस्थयोस्तीव्रतमधकैशिकिनोः सहावस्थानेऽप्यशास्त्रीयत्वम्। तत्र द्विभेदेषु द्वौ (२), त्रिभेदेषु सप्तदश (१७), चतुर्भेदेषु षट्चत्वारिंशत् (४६), पञ्चभेदेषु चत्वारिंशत् (४०), इति ज्ञेयम्। अतस्तेषु त्यक्तेषु पञ्चपञ्चाशदधिकान्यष्टौ शतानि (८९९) शास्त्रीयाः। एते यदि त्याज्यास्तर्हि संख्यायां किमित्युक्ता इत्यत्रोत्तरगर्भं विशेषणमाह—पुनः कीदृशम्? प्रस्तारसिद्ध्यर्थमुक्तान्, संख्यायामिति शेषः। प्रस्तारोऽत्र नष्टोद्दिष्टयोरप्युपलक्षणम्। यदि तद्गणना न क्रियेत तर्हि प्रस्तारनष्टोद्दिष्टानि न सिद्ध्येयुरिति भावः। अत्र दृष्टान्तमाह—किंवत्? क्रमसपुनरुक्तिकूटवत्, क्रमाश्च पुनरुक्त्या सहिताः कूटाः कूटतानाश्च, तैस्तुल्यम्। यथा प्राचीनैरकूटताना अपि क्रमा पुनरुक्तिकूटतानाश्च कूटतानसंख्यायां प्रस्तारादिसिद्ध्यर्थं गण्यन्ते॥ १४॥

संख्याप्रस्तारादि निगमयन्पण्डितान्प्रार्थयते—

संख्याप्रस्तारादि प्रोक्तमिति मया प्रसङ्गतः कुतुकात्।
अनुपेक्ष्यं गुणगृह्यैः प्राचीनानुक्तमपि विबुधैः॥ २५॥

संख्याप्रस्तारादीति। मया प्रसङ्गतो मेलनिरूपणप्रसङ्गे कुतुकात्कौतुकाद्धेतोरिति प्रोक्तं संख्याप्रस्तारादि मेलसंख्याप्रस्तारनष्टोद्दिष्टं प्राचीनानुक्तमपि प्राच्यैरकथितमपि विबुधैरनुपेक्ष्यं नानादरणीयम्। तत्र हेतुमाह—कीदृशैः? गुणगृह्यैः, गुणानां गृह्याः पक्षपातिनस्तैः। गृह्यैरिति 'पदास्वैरि—' (३-१-११९) इति पक्षार्थे ग्रहेः क्यप्॥ २९॥

प्रकृतमनुसरन्कतिचन मेलान्वक्तुं प्रतिजानीते—

तेषु प्रसिद्धरागैर्विशेषितान्विंशतिं ब्रुवे त्र्यधिकान्।

निर्भेद एक एकभिदौ द्वौ द्विभिदस्तु सप्तैव ॥ २६ ॥
चत्वारः स्युस्त्रिभिदश्चतुर्भिदोऽष्टौ च पञ्चभिद एकः ।

तेष्विति । तेषु शुद्धत्वैकभेदत्वादिभिः षड्विधेषु मेलेषु त्र्यधिकां विंशतिं मेलान्ब्रुवे वक्ष्यामि । कीदृशान् ? प्रसिद्धरागैर्मुखारीप्रमुखैर्विशेषितान्, मुखारीमेल इत्यादिसंज्ञकानित्यर्थः । त्रयोविंशतिमेव तान्विवृणोत्यार्योत्तरार्धपूर्वार्धाभ्याम्— **निर्भेद** इति । निर्भेदः शुद्धस्वरसप्तक एकः, मेल इति शेषः । एकभिदावेकैकभेदौ द्वौ । वीप्सा सर्वत्र ज्ञेया । द्विभिदो द्विद्विभेदास्तु सप्तैव । चत्वारः स्युस्त्रिभिदस्त्रित्रिभेदाः । चतुर्भिदश्चतुश्चतुर्भेदा अष्टौ । पञ्च भिदा भेदा यस्मिन्स पञ्चभिद एकः । अत्र तु वीप्सा न ॥ २६- ॥

एकैकभिदादीनामेषां स्वस्वमेलेषूत्तरोत्तरमधिकाधिकसंख्याकत्वं प्रतिजानीते—

तत्तन्मेलेष्वधिकाधिकसंख्यास्तेऽथ रागांस्तान् ॥ २७ ॥
वच्मि मुखारी रेवादिगुप्तिरथ सामपूर्वकवराली ।
तोडीनादादिकरामक्रीभैरववसन्ताश्च ॥ २८ ॥
भैरव्याद्यवसन्ता मालवगौडोऽथ रीतिगौडश्च ।
आभीरनाटहम्मीरवराख्यः शुद्धरामक्रीः ॥ २९ ॥
श्रीरागः कल्याणः काम्बोदी मल्लवैरिसामन्तौ ।
कर्णाटो देशाक्षी शुद्धो नाटश्च सारंगः ॥ ३० ॥

तत्तन्मेलेष्विति । ते मेलाः, तत्तन्मेलेषु तेषु तेषु सजातीयेषु मेलेषूत्तरोत्तरमधिकाधिकसंख्याः, न तु क्वचिन्न्यूनसंख्याः क्वचिदधिकसंख्या वेत्यर्थः । अथ मेलनामकरांस्त्रयोविंशतिसंख्यान्रागान्क्रमेण वक्तुं प्रतिजानीते—अथ रागांस्तानिति । वच्मि वक्ष्यामि । तानेवाह—मुखारीत्यादिकेनार्यात्रयेणाद्याक्षरद्वयोनेन । मुखारीति स्त्रीलिङ्गम् । रेवादिगुप्ती रेवगुप्तिः । अथ सामपूर्वकवराली सामवराली । तत्र मुखारी शुद्धनामकरी । रेवगुप्तिसामवराल्यौ त्वेकभेदनामकारिण्यौ । द्विभेदनामकरान्सप्ताह—तोडीति । तोडीत्याद्येकं पदम् । नादादिकराम-

क्रीर्नादरामक्रीः । ०भैरववसन्ताश्चेति । चशब्दः पूर्वोक्तैः समुच्चये । आद्यवसन्ता भैरवी, मालवगौडः, अथ रीतिगौडश्च । त्रिभेदनामकरांश्चतुर आह—आभीर-नाटहम्मीरवराट्य इति । आभीरनाट एको रागः, हम्मीरो वराटी च ताः; शुद्धरामक्रीः, देशीकार इति लोके । चतुर्भेदनामकरानष्टावाह—श्रीराग इति । श्रीरागः, कल्याणः, काम्बोदी, मल्लुवैरिसामन्तौ मल्लुवैरी सामन्तश्च; अत्र मल्लुवैरीति पर्यायेण मल्लारिरुच्यते, यथा निःशङ्केन 'विभाषा प्रेङ्खके नव' (सं० २-१-३१) इत्यत्र प्रेङ्खशब्देन हिन्दोल उक्तः । कर्णाटः कर्णाटगौडः, देशाक्षी, शुद्धो नाट एकरागः । पञ्चभेदनामकरमाह—सारंग इति ॥-२९—३०॥

निगमयति—

इति रागा नामकरा मेलानां गुणदृशामथ क्रमतः ।
तांस्तु मुखारीमेलप्रभृतीन्वक्ष्यामि लक्षणतः ॥ ३१ ॥
सन्ति मुखारीमेले शुद्धाः षड्जादयः स्वराः सप्त ।
स्यादेषास्मान्मेलात्तुरुष्कतोड्यादिरागाश्च ॥ ३२ ॥
मेलेऽथ रेवगुप्तेर्भवन्ति षट् सरिमपधनयः शुद्धाः ।
गोऽन्तरसंज्ञश्चास्माद्रागाः स्यू रेवगुप्ताद्याः ॥ ३३ ॥

इति रागा इति । गुणदृशां (१३) त्रयोविंशतिसंख्यानां मेलानां नामकरा इति रागाः । अथैवं तत्तद्रागविशेषितमेलानां प्रत्येकं क्रमतो लक्षणानि वक्तुं प्रतिजानीते—अथ क्रमत इति । मुखारीमेलप्रभृतींस्तु तान्मेलान् लक्षणतो लक्षणेन वक्ष्यामि । यथोद्देशं मुखारीमेलं लक्षयति—सन्ति मुखारीति। मुखारीमेले षड्जादयः सप्त स्वराः शुद्धाः स्वस्वान्तिमश्रुतिस्थाः सन्ति, न तु केऽपि विकृता इत्यर्थः । एतन्मेलभवान्रागानाह—स्यादेषेति । अस्मान्मेलादेषा मुखारी स्यात्, तुरुष्कतोड्यादिरागाश्च, स्युरिति शेषः । तुरुष्कतोडी, हुसेनीति भाषायाम् । इयं वक्ष्यमाणे तोडीमेलेऽपि कैश्चिदुक्ता । मुखारीति मुखमृच्छति प्राप्नोतीति ऋधातोः 'कर्मण्यण्' (३-२-१) इत्यणन्तान्ङीप् । अथैकभेदेषु पञ्चमं (५) रेवगुप्तिमेलं लक्षयति—मेलेऽथेति । अथ रेवगुप्तेर्मेले षट् सरिमपधनयः षड्जऋषभमध्यमपञ्चमधैवतनिषादाः शुद्धा भवन्ति । गो गान्धारः, अन्तरसंज्ञश्च

मध्यमश्रुतिद्वयग्राही । एतन्मेलभवान्रागानाह—अस्मादिति । अस्मान्मेलादित्येव । रेवगुप्ताद्या रागाः स्युः ॥ ३१–३३ ॥

एकभेदेषु चतुर्दशं (१४) सारमवरालीमेलं लक्षयति—

सामवरालीमेले शुद्धाः सरिगमपधाश्च काकलिका ।
अस्मादियं वसन्तवराट्याद्याश्चापरे रागाः ॥ ३४ ॥

सामेति । सामवरालीमेले सरिगमपधाः शुद्धाः, च परं काकलिका षड्जद्वितीयश्रुतिस्थो निषादः । एतन्मेलभवान्रागानाह—अस्मादिति । अस्मान्मेलादित्येव । इयं सामवराली, च परं वसन्तवराट्याद्या येषां ते, अपरेऽन्येऽपि रागाः, स्युरिति शेषः ॥ ३४ ॥

अथ द्विभेदेषु द्वाचत्वारिंशत्तमं (४१) तोडीमेलं लक्षयति—

तोडीमेले साधारणकैशिकिनौ न शुद्धसरिमपधाः ।
तोडीप्रमुखा रागा मेलात्प्रादुर्भवन्त्यस्मात् ॥ ३५ ॥

तोडीमेल इति । अस्मिन्साधारणकैशिकिनौ (४, १३) साधारणोमध्यमप्रथमश्रुतिस्थो गः, कैशिकी षड्जादिमश्रुतिस्थो निः, च परं शुद्धसरिमपधाः । अस्मान्मेलात्तोडीप्रमुखा रागाः प्रादुर्भवन्ति ॥ ३९ ॥

द्विभेदेष्वेव चतुश्चत्वारिंशत्तमं (४४) नादरामक्रीमेलं लक्षयति—

नादादिमरामक्रीमेले साधारणश्च मृदुसः स्यात् ।
शुद्धा अपि सरिमपधा अस्मादेतन्मुखा रागाः ॥ ३६ ॥

नादादिमरामक्रीमेल इति । अस्मिन्साधारणः (४), च परं मृदुसः (१५) षड्जतृतीयश्रुतिस्थो निः स्यात् । सरिमपधा अपि शुद्धाः ; अपिश्चार्थे । अस्मान्मेलादित्येव । एतन्मुखा नादरामक्रीप्रमुखा रागाः, स्युरिति शेषः ॥ ३६ ॥

द्विभेदेष्वेव पञ्चाशत्तमं (५०) भैरवमेलं लक्षयति—

भैरवमेले शुद्धाः सरिमपधा अन्तरश्च कैशिकिकः ।
भैरवपौरविकाद्या रागा मेलादतस्तु स्युः ॥ ३७ ॥

भैरवमेल इति। अस्मिन्शुद्धाः सरिमपधा अन्तरः कैशिकिकश्च (९, १३)। भैरवः पौरविका चाद्ये येषां ते रागा अतस्तु स्युः ॥ ३७ ॥

द्विभेदेष्वेवैकपञ्चाशत्तमं (९१) वसन्तमेलं लक्षयति—

शुद्धा वसन्तमेले सरिमपधा अन्तरश्च काकलिका।
अस्माद्वसन्तटक्कहिजेजा हिन्दोलमुख्याश्च ॥ ३८ ॥

शुद्धा वसन्तमेल इति। अस्मिन्सरिमपधाः शुद्धाः, अन्तरः काकलिका च (९, १४)। अस्मान्मेलादित्येव, वसन्तटक्कहिजेजा हिन्दोलमुखा हिन्दोलप्रभृतयश्च, रागाः स्युरिति शेषः ॥ ३८ ॥

द्विभेदेष्वेवाष्टपञ्चाशत्तमं (९८) वसन्तभैरवीमेलं लक्षयति—

मेले वसन्तभैरविकायाः शुद्धाः सरिमपधा मृदुमः।
कैशिक्यपीयमस्मान्माऽथ मेलतोऽन्ये च ॥ ३९ ॥

मेले वसन्तभैरविकाया इति। अस्मिन्शुद्धाः सरिमपधाः, मृदुमो मध्यमतृतीयश्रुतिस्थो गः कैशिक्यपि (६, १३)। अस्मान्मेलत इयं वसन्तभैरवी, अथान्ये च, रागाः स्युरिति शेषः। अथ चार्थे ॥ ३९ ॥

द्विभेदेष्वेव षष्टितमं (६०) मालवगौडमेलं लक्षयति—

मालवगौडकमेले सरिमपधा एव पञ्च शुद्धाः स्युः।
मृदुमध्यममृदुषड्जौ चास्मान्मेलाद्भवन्तीमे ॥ ४० ॥
मालवगौडो गौडयौ पूर्वी पाडी च देवगान्धारः।
गोण्डक्रिया कुरञ्जी बहुली रामक्रिया चापि ॥ ४१ ॥
पावक आसावरिका पञ्चमबङ्गालशुद्धललिताश्च।
गुर्जरिकापरजाख्यौ विशुद्धगौडादिकाश्चान्ये ॥ ४२ ॥

मालवगौडकमेल इति। अस्मिन्सरिमपधा एव पञ्च शुद्धाः स्युः, च परं मृदुमध्यममृदुषड्जौ (६, १९) अस्मान्मेलादिमे वक्ष्यमाणा रागा भवन्ति। तानेव द्वाभ्यामाह—मालवेति। मालवगौडः, गौडयौ गौडी चैत्तीगौडी च, पूर्वी, पाडी देवगान्धारश्च, गोण्डक्रिया कुरञ्जी बहुली रामक्रिया चापि। चापीति

निपातसमुदायश्चार्थे । पावकः, आसावरिका, पञ्चमश्च वङ्गालश्च शुद्धललिता च ताश्च, गुर्जरिका च परजाख्यश्च तौ । परज इति देशविशेषे नामरागस्य । विशुद्धगौड आदिर्येषां ते तदादिका अन्ये च ॥ ४०–४२ ॥

द्विभेदेष्वेव चतुरशीतितमं (८४) रीतिगौडमेलं लक्षयति—

**अथ रीतिगौडमेले पञ्च भवेयुः सरिगमपाः शुद्धाः ।**
**तीव्रतरधकैशिकिनौ चैतत्प्रमुखा भवन्त्यस्मात् ॥ ४३ ॥**

**अथ रीतिगौडमेल** इति । अस्मिन्पञ्च सरिगमपाः शुद्धा भवेयुः । तीव्रतरधकैशिकिनौ च (११, १३) । तीव्रतरधः शुद्धनिषादस्थो धः । अस्मान्मेलादित्येव । एतत्प्रमुखा रीतिगौडादिरागा भवन्ति ॥ ४३ ॥

अथ त्रिभेदेष्वेकषष्टितमम् (६१) आभीरनाटमेलं लक्षयति—

**आभीरनाटमेले शुद्धसमपधाश्च तीव्रतरऋषभः ।**
**साधारणमृदुसौ चेत्यतः स्युराभीरनाटाद्याः ॥ ४४ ॥**

**आभीरनाटे**ति । अस्मिञ्शुद्धसमपधाः, च परं तीव्रतरऋषभः साधारणमृदुसौ च (२, ४ १९) इति । अतो मेलादित्येव, आभीरनाटाद्याः स्युः; रागा इति शेषः ॥ ४४ ॥

त्रिभेदेष्वेव सप्तसप्ततितमं (७७) हम्मीरमेलं लक्षयति—

**हम्मीरमेल उज्ज्वलसमपधतीव्रतररिमृदुममृदुसकाः ।**
**हम्मीरविहङ्गडकेदारप्रमुखा अतो मेलात् ॥ ४५ ॥**

**हम्मीरमेल** इति । अस्मिन्नुज्ज्वलाः शुद्धाः समपधाश्च तीव्रतररिमृदुममृदुसकाश्च (२, ६, १९) ते, स्युरिति शेषः । अतो मेलात्, हम्मीरश्च विहङ्गडश्च केदारश्च ते प्रमुखा येषां ते, भवन्तीति शेषः ॥ ४९ ॥

त्रिभेदेष्वेव पञ्चषष्ट्युत्तरशततमं (१६९) शुद्धवराटीमेलं लक्षयति—

**शुद्धवराटीमेले साधारणतीव्रतमममृदुसाः स्युः ।**
**शुच्यथ सरिपधमस्माद्भवन्ति रागा वराट्याद्याः ॥ ४६ ॥**

शुद्धवराटीमेल इति । अस्मिन्साधारणतीव्रतममृदुसाः (४, ८, १९) स्युः । अथ सरिपधं शुचि शुद्धम , स्यादिति शेषः । अथ चार्थे । अस्मान्मेलादित्येव, वराट्याद्या रागा भवन्ति । सरिपधमिति समाहारद्वंद्वः ॥ ४६ ॥

त्रिभेदेष्वेव सप्तोत्तरशतद्वयपूरणं (२०७) देशीकारमेलं लक्षयति—

शुचिरामक्रीमेले मृदुमकतीव्रतममृदुसाः शुद्धम ।
सरिपधमियमत्र ललितजैताश्रीत्रावणीदेश्यः ॥ ४७ ॥

शुचिरामक्रीमेल इति । अस्मिन्मृदुमकतीव्रतममृदुसाः, मृदुमस्तीव्रतममो मृदुसश्च (६, ८, १९) सरिमपधं शुद्धम् । अत्रास्मिन्मेल इत्येव । इयं शुद्धरामक्रीः, ललितजैताश्रीत्रावणीदेश्यः, ललितो विभासभेदः, जैताश्रीः, त्रावणी, देशी च । अन्येऽपि स्युरिति च शेषः ॥ ४७ ॥

अथ चतुर्भेदेषु त्रयोदशं (१३) श्रीरागमेलं लक्षयति—

श्रीरागमेलके रिस्तीव्रः साधारणोऽथ धस्तीव्रः ।
कैशिक्यपि शुचिसमपा मेलादस्माद्भवन्त्येते ॥ ४८ ॥
श्रीरागमालवश्रीधन्याश्यो भैरवी तथा धवला ।
सैन्धव्याद्याश्चान्ये देशविशेषैर्विभिन्नाख्याः ॥ ४९ ॥

श्रीरागमेलक इति । अस्मिन् रिस्तीव्रस्तीव्रऋषभः, अथ साधारणः, तीव्रधस्तीव्रधैवतः, कैशिकी (१, ४, १० १३) शुचिसमपा अपि शुद्धसमपाश्च । अस्मान्मेलादेते भवन्ति ॥ तानेवाह—श्रीरागेति । श्रीरागश्च मालवश्रीश्च धन्याशी च ताः, तथा भैरवी, धवला धवलधनाश्रीः ; सैन्धवी 'सिन्धोडा' इति भाषायाम् । तदाद्या अन्ये च । कीदृशा एतेऽन्ये च ? देशविशेषैस्तत्तद्देशैर्हेतुभिर्विभिन्नाख्या भिन्नभिन्ननामानः । यथा धवलाया एव 'मेवाडा' इति देशनाम ॥ ४९ ॥

चतुर्भेदेष्वेव चतुर्दशाधिकशतपूरणं (११४) कल्याणमेलं लक्षयति—

कल्याणस्य तु मेले शुचयः सपधा रिरस्ति तीव्रतरः ।
साधारणश्च मृदुपो मृदुसोऽस्मिन्नेष इतरे च ॥ ५० ॥

कल्याणस्य तु मेल इति। अस्मिंस्तु सपधाः शुचयः शुद्धाः, रिस्तीव्रतरः साधारणो मृदुपो मृदुसश्च (१, ४, ९, १९) अस्ति। अस्मिन्मेल इत्येव, एष कल्याण इतरेऽन्ये च, रागाः स्युरिति च शेषः ॥ ५० ॥

चतुर्भेदेष्वेव चत्वारिंशदुत्तरशतपूरणं (१४०) काम्बोदीमेलं लक्षयति—

काम्बोदीमेले तीव्रतररिरन्तरकतीव्रतरधौ च।
काकलिका शुचिसमपा अतश्च काम्बोददेवक्रि ॥ ५१ ॥

काम्बोदीमेल इति। अस्मिंस्तीव्रतररिरन्तरकतीव्रतरधौ काकलिका च (२, ९, ११, १४) शुचिसमपाः शुद्धसमपाः, स्युरिति शेषः। अतो मेलादित्येव, काम्बोदश्च देवक्रीश्च तत्समाहारः काम्बोददेवक्रि। पुंलिङ्गोऽप्याद्यः। चादन्येऽपि स्युरित्येव ॥ ५१ ॥

चतुर्भेदेष्वेव द्विषष्ट्यधिकशतपूरणं (१६२) मल्लारिमेलं लक्षयति—

मल्लारिमेल उक्तास्तीव्रतररिर्मृदुमतीव्रतरधाश्च।
मृदुसः शुद्धाः समपा अस्मादेते तु मल्लारिः ॥ ५२ ॥
नटयुक्स पूर्वगौडो भूपालीगोण्डशंकराभरणाः।
नटनारायणनारायणगौडौ कोऽपि केदारः ॥ ५३ ॥
सालङ्कनाटवेलावल्यावथ मध्यमादिरागश्च।
सावेरी सौराष्ट्री जायन्तेऽन्येऽपि देशीस्थाः ॥ ५४ ॥

मल्लारिमेल उक्ता इति। अस्मिंस्तीव्रतररिमृदुमतीव्रतरधा मृदुसः (१, ६, ११, १९) शुद्धाः समपाश्चोक्ताः कथिताः। अस्मान्मेलादित्येव, एते तु, जायन्त इत्यग्रिमेण संबन्धः। तानेवाह—मल्लारिरिति। मल्लारिः, स मल्लारिर्नटयुङ्नटपूर्वयोगी, नटमल्लारिश्चेत्यर्थः। चार्थोऽत्र ज्ञेयः। पूर्वगौडः, भूपाली च गोण्डश्च शंकराभरणश्च ते, नटनारायणश्च नारायणगौडश्च तौ, कोऽपि केदारः, हम्मीरमेलजादन्यः केदारः, सालङ्कनाटश्च वेलावली च ते, अथ मध्यमादिरागो मध्यमादिनामा रागश्च, सावेरी, सौराष्ट्री, अन्येऽपि देशीस्था जायन्ते ॥ ५२–५४ ॥

चतुर्भेदेष्वेव पञ्चचत्वारिंशदुत्तरशतद्वयपूरणं (२४५) सामन्तमेलं लक्षयति—

सामन्तस्य हि मेले शुचिसमपास्तीव्रतमरिरन्तरकः ।
तीव्रतमधकाकल्यावस्मादेतन्मुखा रागाः ॥ ५५ ॥

सामन्तस्य हि मेल इति । अस्मिञ्शुचिसमपाः शुद्धाः समपाः, तीव्रतमरिः, अन्तरकः, तीव्रतमधकाकल्यौ (३, ९, १२, १४) । अस्मान्मेलादित्येव, एतन्मुखाः सामन्तप्रमुखा रागा जायन्त इत्येव ॥ ९९ ॥

चतुर्भेदेष्वेवैकोनषष्ट्यधिकशतद्वयपूरणं (२४९) कर्णाटगौडमेलं लक्षयति—

कर्णाटगौडमेले शुचिसमपास्तीव्रतमरिमृदुमौ च ।
तीव्रधकैशिकिनौ स्युर्मेलादस्मादिमे रागाः ॥ ५६ ॥
कर्णाटगौडकोऽड्डाणो नागध्वनिविशुद्धबङ्गालौ ।
वर्णादिनाट इतरे तुरुष्कतोड्यादिकाश्च स्युः ॥ ५७ ॥

कर्णाटगौडमेल इति । अस्मिञ्शुचिसमपाः शुद्धाः समपाः, तीव्रतमरिश्च मृदुमश्च तौ, तीव्रधकैशिकिनौ च (३, ६, १०, १३) स्युः । अस्मान्मेलादिमे रागाः, स्युरित्यग्रिमेण संबन्धः ॥ तानेवाह—कर्णाटेति । कर्णाटगौडकः, अड्डाणः, नागध्वनिश्च विशुद्धबङ्गालश्च तौ, वर्णादिनाटो वर्णनाटः, तुरुष्कतोड्यादिका इतरे च । इयं तुरुष्कतोडी, इराखपर्यायतया कर्णाटगौडस्य समच्छायत्वेन 'परदा' इति लोके । तथा च कैश्चित्तत्द्रागसमच्छायाः परदाख्या द्वादश रागा उच्यन्ते । तोड्याः समच्छाया हुसेनी । भैरवस्य जुलुफः । रामक्रियाया मुसली । आसावर्या उज्ज्वलः । विहङ्गडस्य नवरोजः । देशकारस्य वाखरेजः । सैन्धव्या हिजेजः । कल्याणयमनस्य पञ्चग्रहः । देवक्रयाः पुष्कः । वेलावल्याः सरपर्दः । कर्णाटस्येराखः । अन्योपरागाणां सुगादुमा इति ॥९६,९७॥

चतुर्भेदेष्वेव चतुःषष्ट्यधिकशतद्वयपूरणं (२६४) देशाक्षीमेलं लक्षयति—

देशाक्षीमेले शुचिसमपास्तीव्रतमरिस्तथा मृदुमः ।
तीव्रतरधमृदुसावत एषान्ये चापि रागाः स्युः ॥ ५८ ॥

देशाक्षीमेल इति । अस्मिञ्शुचिसमपाः शुद्धाः समपाः, तथा तीव्रतमरिः, मृदुमः, तीव्रतरधमृदुसौ (२, ६, ११, १९) । अतोऽस्मान्मेलादित्येव, एषा देशाक्षी, अन्ये चापि रागाः स्युः ॥ ५८ ॥

चतुर्भेदेष्वेव सप्तषष्ट्यधिकशतद्वयपूरणं (२६७) शुद्धनाटीमेलं लक्षयति—

मेले तु शुद्धनाट्याः शुचिसमपास्तीव्रतमरिमृदुमौ च ।
तीव्रतमधमृदुसमतो रागाः स्युः शुद्धनाटाद्याः ॥ ५९ ॥

मेले तु शुद्धनाट्या इति । अस्मिञ्शुचिसमपाः शुद्धाः समपाः, तीव्रतमरिमृदुमौ तीव्रतमधमृदुसं च (३, ६, १२, १९) । अतोऽस्मान्मेलादित्येव, शुद्धनाट आदिर्येषां ते रागाः स्युः । पुंलिङ्गोऽप्ययम् । तीव्रतमधमृदुसमिति समाहारद्वंद्वः ॥ ५९ ॥

अथ पञ्चभेदेषु मेलेषु चतुश्चत्वारिंशदुत्तरशतपूरणं (१४४) सारंगमेलं लक्षयति—

सारंगरागमेले तीव्रतररितीव्रतमगमृदुपाश्च ।
तीव्रतमधमृदुसौ शुचि सपमत एतन्मुखा रागाः ॥ ६० ॥

सारंगरागमेल इति । अस्मिंस्तीव्रतररिश्च तीव्रतमगश्च मृदुपश्च ते, तीव्रतमधश्च मृदुसश्च तौ (२, ७, ९, १२, १९) शुचि शुद्धं सपं षड्जपञ्चमौ । अतोऽस्मान्मेलादित्येव, एतन्मुखाः सारंगप्रमुखा रागाः स्युरित्येव । सपमिति समाहारद्वंद्वः ॥ ६० ॥

सकलकलेत्युपनामकसोमकविहिते हितेऽल्पबुद्धीनाम् ।
मेलानां तु तृतीयो रागविबोधे विवेकोऽयम् ॥ ६१ ॥

सकलकलेति—मेलानां तु विवेकस्तृतीयः । शेषं स्पष्टम् ॥ ६१ ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ।
रागविबोधविवेकस्तृतीय एवं मनाग्विवृतः ॥

इति श्रीसोमनाथनिर्मिते रागविबोधे तृतीयो विवेकः ॥ ३ ॥

# चतुर्थो विवेकः

एवं मेलनिरूपणप्रसङ्गेनोद्दिष्टान्रागान्यथोद्देशं लिलक्षयिषुस्तावद्रागसामान्यलक्षणमाह—

स्वरवर्णभूषितो यो ध्वनिभेदो रञ्जकः स राग इह ।
बहुविधसंख्याः प्राचां मतैरनेकैः प्रसिद्धा ये ॥ १ ॥
देशजनुषोऽप्रसिद्धास्तेऽब्धितरङ्गा इव त्वसंख्याताः ।
शुद्धच्छायालगसंकीर्णतया त्रिविधतास्त्येषाम् ॥ २ ॥

स्वरवर्णभूषित इति । यो रञ्जको रञ्जनकारी ध्वनिभेदो ध्वनिविशेषः स रागः । स्वरेऽतिव्याप्तिवारणाय विशेषणं स्वरवर्णभूषित इति । स्वराणां वर्णो ग्रहांशन्यासादियुक्ता गानक्रिया तया भूषितः । तथा च मतङ्गः—

"योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥" इति ॥

स एव रागशब्दस्य रूढत्वयौगिकत्वयोगरूढत्वैः प्रयोगमप्यह—

"अश्वकर्णादिवद्रूढो यौगिको वापि मन्थवत् ।
योगरूढश्च वा रागो ज्ञेयः पङ्कजशब्दवत् ॥" इति ॥

तत्र रागशब्दस्य केवलं रूढत्वं तु क्वचिदरञ्जकत्वेऽपि ज्ञेयम् । 'अयं तु रागो मह्यं न रोचते' इति वाक्यप्रयोगे । तत्र प्रसिद्धरागेष्वनेकमतैः संख्यावैलक्षण्यमाह—इहेति । इह एषु रागेषु ये प्रसिद्धाः पूर्वकाल इदानीं च प्रसिद्धिमन्तस्त इत्यर्थात् । प्राचां प्राचीनानामनेकैर्मतैर्बहुविधसंख्याः । तद्यथा—निःशङ्कमते तु

दशविधाश्चतुःषष्ट्यधिकशतद्वयं (२६४) रागाः । तत्र त्रिंशद् (३०) ग्रामरागाः । अष्ट (८) उपरागाः । विंशतिः (२०) रागाः । षण्णवतिः (९६) भाषाः । विंशतिः (२०) विभाषाः । चतस्रः (४) अन्तरभाषाः । एकविंशतिः (२१) रागाङ्गाणि । विंशतिः (२०) भाषाङ्गानि । पञ्चदश (१५) क्रियाङ्गानि । त्रिंशत् (३०) उपाङ्गानि । तथा च निःशङ्कः—

"सर्वेषामपि रागाणां मिलितानां शतद्वयम् ।
चतुःषष्ट्यधिकं ब्रूते शार्ङ्गी श्रीकरणाग्रणीः ॥" (सं० २-२-१८) इति ॥

रागार्णवमते तु—षट्त्रिंशत्प्रवर्तकरागाः । तत्र भैरव-पञ्चम-नट्ट-मल्लारि-मालव-गौड-देशाङ्गाश्चेति षड्रागाः । एकैकाश्रितास्तु वङ्गपालादिप्रमुखाः पञ्च पञ्चेति त्रिंशत् । तथाचोक्तम्—

"भैरवः पञ्चमो नट्टो मल्लारिर्गौडमालवः ।
देशाङ्गश्चेति षड्रागाः प्रोच्यन्ते लोकविश्रुताः ॥
वङ्गपालो गुणकरी मध्यमादिर्वसन्तकः ।
धनाश्रीश्चेति पञ्चैते रागा भैरवसंश्रयाः ॥" इत्यादि ।

केषांचिन्मते तु षट्षष्टी रागाः । तत्र शुद्धभैरवादयः षट् पुरुषाः । तेषां प्रत्येकं पञ्च पञ्च योषितः । पञ्च पञ्च पुत्राश्च । तथाचोक्तम्—

"रागाः षट्पुरुषास्तेषां पञ्च पञ्च तु योषितः ।
सूनवः पञ्च पञ्चैव षट् षष्टिरिति तेऽखिलाः ॥"

इत्यादि । अपरेषां तु मतेऽष्टचत्वारिंशत्प्रसिद्धरागाः । तथाचोक्तम्—

"श्रीरागाद्याः षण्णराः षट् तद्भार्या मालतीमुखाः ।
षट्षट्पुत्रिकाः सर्वे चत्वारिंशत्तथाष्ट च ॥
श्रीरागात्षट् तु मालत्यां गौडी कोलाहली तथा ।
आन्धाली देवगान्धारी द्राविडी मालकैशिकी ॥
वसन्त्यां षट् जयन्त्यां तु गोण्डक्री देवशाखिका ।

वराटिका धनाश्रीश्च रामक्रीः पटमञ्जरी ॥
पञ्चमाद्देशिकायां षट् शुद्धटी च पहाडिका ।
त्रोटकी मोटकी सिन्धुस्ततो मल्लारिकेति च ॥
भैरवात्षट् सुपर्ण्याः स्युर्भैरवी गुर्जरी तथा ।
वेलावली च कर्णाटी ललिता रक्तहंसिका ॥
मेघरागाज्जातिकायां षट् कामोदाथ सोरटी ।
कंसालिका च बङ्गाली भूपाली मधुकर्यपि ॥
नटनारायणात्षट् तु कमलायां विहङ्गडा ।
गान्धारी वल्लभा वंशवेणुस्त्रावण्यसावरी ॥" इति ।

एवमादिमते रागसंख्या अनेका: । तत्तद्देशजातानामप्रसिद्धरागाणां त्वसंख्यतामाह—**देशजनुष** इति । देशे जनुर्जन्म येषां ते । अत एवाप्रसिद्धा अन्यदेशेष्वविख्यातास्ते रागास्तु अब्धितरङ्गा इव समुद्रलहरीवदसंख्याताः । तुशब्दो भिन्नक्रमः । यथाह मतङ्गः—'देशजानां रागाणामानन्त्यादनिबद्धत्वाच्च संख्या नास्तीति मन्तव्यम्' इति । रागार्णवेऽपि—

'न रागाणां न तालानामन्तः कुत्रापि विद्यते ।'

इति । इदानीमुपापत्युक्तं यथायोगं रागाणां त्रैविध्यमाह—**शुद्धच्छायालगसंकीर्णतयेति** । शुद्धतया च्छयालगतया संकीर्णतया चैषां रागाणां त्रिविधतास्ति ॥ १, २ ॥

यथोद्देशं लक्षयति—

**शुद्धो रञ्जनकारी स्वेन च्छायालगः पराश्रयतः ।**
**संकीर्णस्तूभयथा मतमुदितमुमापतेरेवम् ॥ ३ ॥**

**शुद्धो रञ्जनेति** । अत्र सर्वत्र यत्तदोरध्याहारः । यः स्वेन स्वत एव रञ्जनकारी न तु परच्छायाश्रयणेन स शुद्धः । यः पराश्रयतोऽन्यरागाश्रयणेन रञ्जनकारीत्येव स च्छायालगः । यस्तूभयथा शुद्धच्छायालगत्वमिश्रणेन रञ्जन-

कारीत्येव स संकीर्णः। एवमुमापतेः शंकरस्य मतमुदितमुक्तम्। तथा चोक्तमुपापतिना—

“मयैव पञ्चभिर्वक्त्रैः सृष्टाः पूर्वं कुतूहलात्।
अतः संभूय शुद्धास्ते षट्त्रिंशत्संख्ययोदिताः॥
एतेषां च्छायया जाताश्छायालगसमाह्वयाः।
असंख्यातास्तु ते तेषु शतमेकोत्तरं क्रमात्॥
शुद्धं तु शिवरूपेण शक्तिरूपेण सालगम्।
द्वयोर्मिश्रं तु संकीर्णमतस्ते त्रिविधा मताः॥” इति॥ ३॥

रागाणां तूत्तममध्यमाधमत्वरूपं प्रकारान्तरेणापि त्रिविधतां मतान्तरेणाह—सार्धयार्यया; तत्रोत्तमाँल्लक्षयति—

**येऽत्रालापालप्तिप्रबन्धयोग्यास्त उत्तमाः कथिताः।**
**अपि तादृक्षा येऽल्पप्रचारिणो मध्यमास्ते स्युः॥ ४॥**
**अपि बहुतरप्रचारास्तदयोग्यास्तेऽधमा इति त्वन्ये।**

येऽत्रालापेति। अत्र येषु रागेषु य आलापश्च आलप्तिश्च प्रबन्धो वस्तुसंज्ञश्च तद्योग्यास्त उत्तमाः कथिताः। तत्रालापो नाम यत्र ग्रहांशन्यासापन्यासानां मन्द्रतारयोश्च स्वराल्पत्वस्य स्वरबहुत्वस्य च षाडवौडुवयोरप्यभिव्यक्तिर्भवति सः। तथा च निःशङ्कः—

“ग्रहांशतारमन्द्राणां न्यासापन्यासयोस्तथा।
अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि॥
अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते।” (सं० २-२-२३,२४) इति।
‘आलप्तिर्यत्र चत्वारि स्वस्थानानि भवन्ति सा’। इति।

तानि यथा—यत्र गीतं स्थाप्यते स स्वरः स्थायी। ततः स्थायिन अरोहेण चतुर्थस्वरो द्व्यर्धसंज्ञः। तस्माद्व्यर्धात्स्वरादधस्तनेषु तृतीयस्वरादिषु तत्तद्रागोचितस्फुरितकम्पितादिगमकयुक्तत्वेन वादनं पुनः पुनरुच्चारणं वा मुखचाल-

संज्ञकम्। तत्र स्थायिनमारभ्य द्व्यर्धस्वरं मर्यादीकृत्य तदधस्तनाद्यथोचितं चालयित्वा स्थायिनि न्यासे कृते प्रथमं स्वस्थानम्। पूर्वोक्तद्व्यर्धस्वरेण सह पूर्ववद्वादनमुच्चारणं वा तत्पूर्ववत्कृत्वा तत्रैव स्थायिनि न्यासेन स्वस्थानसमाप्तिर्द्वितीयं स्वस्थानम्। स्थायिनः स्वरादष्टमः स्वरो द्विगुणसंज्ञः; चतुर्थस्तु द्व्यर्धः; तयोश्चतुर्थाष्टमयोर्मध्ये स्थिताः स्वराः पञ्चमषष्ठसप्तमा अर्धस्थितसंज्ञाः; तेषु पूर्ववद्वादनं पुनःपुनरुच्चारणं वा कृत्वा स्थायिन्येव न्यसनेन स्वस्थानसमाप्तिस्तृतीयं स्वस्थानम्। द्विगुणसंज्ञकेऽष्टमस्वरे तदुत्तरतदुत्तरस्वरेषु च पूर्ववद्वादनं पुनःपुनरुच्चारणं वा कृत्वा स्थायिन्यालप्तिसमाप्तिश्चतुर्थं स्वस्थानम्। तथा च स एव—

"रागालपनमालप्तिः प्रकटीकरणं मतम्।
. . . . . . . . . . . . . . . . . . . . . ॥
स्वस्थानैः सा चतुर्भिः स्यात् . . . . . . . . ।
ततश्चतुर्थो द्व्यर्धः स्यात्स्वरे तस्मादधस्तने ॥
चालनं मुखचालः स्यात्स्वस्थानं प्रथमं च तत्।
द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम् ॥
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः।
द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ॥
अर्धस्थिते चालयित्वा न्यसनं [1] तत्तृतीयकम्।
द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ॥" इति ॥

(सं० ४-१८९-१९५)

प्रबन्धो नाम उद्ग्राहमेलापकध्रुवाभोगाख्यैः तथा स्वराक्षरैः बिरुदैस्तेनशब्दैः पाटैस्तालैश्च षड्भिरङ्गैरुपलक्षितो ग्रथनाविशेषः। तथा च पार्श्वदेवः—

"चतुर्भिर्धातुभिः षड्भिश्चाङ्गैर्यस्मात्प्रबद्ध्यते।
तस्मात्प्रबन्धः कथितो गीतलक्षणकोविदैः ॥
उद्ग्राहाद्यस्तु चत्वारः स्वरादीनि च षट् तथा।
वसन्ति यत्र स ज्ञेयः प्रबन्धो वस्तुसंज्ञया ॥" इति।

निःशङ्कोऽपि—

"प्रबन्धावयवो धातुः स चतुर्धा निरूपितः।

[1] तु तृतीयकमिति संगीतरत्नाकरपाठः

उद्ग्राहः प्रथमस्तत्र ततो मेलापकध्रुवौ ॥
आभोगश्चेति . . . . . . . . . . . .।" (सं० ४-७, ८)
[1]अङ्गानि षट् भवन्त्यस्य स्वरस्तु विरुदं पदम्।
तेनकैः पाटतालौ च . . . . . . . . ॥" इति (सं० ४-१२, १३)

ते च उत्तमरागाः—मुखारी; शुद्धनाटी; मालवगौडः; शुद्धवराटी; गुर्जरी; ललितः; शुद्धरामक्रिया; शुद्धवसन्तः; भैरवी; हिन्दोलः; श्रीरागः; कर्णाटगौडः; सामन्तः; देशाक्षी; धन्यासी; बहुली; आभीरी; मल्लारी; मालवश्रीः; सालङ्कनाटी; एवमादयः। मध्यमाँल्लक्षयति—अपि तादृक्षा इति। ये तादृक्षा अपि आलापालप्तिप्रबन्धयोग्या अपि सन्तोऽल्पप्रचारिणो लोकेऽबहुव्यवहारास्ते मध्यमा स्युः। ते च मध्यमरागाः—केदारगौडः; काम्बोदी, बङ्गालः; वेलावली; मध्यमादिः; नारायणी; रीतिगौडः; नादरामक्रिया; पाडी; भूपाली; रेवगुप्तिः; गोण्डक्रिया; हिजेजः; वसन्तभैरवी; सामवराली चेत्यादयः। अधमाँल्लक्षयति—अपि बहुतरेति। य इत्यर्थाद्ये बहुतरप्रचारा अपि तदयोग्यास्तेषामालापादीनामयोग्यास्तेऽधमाः स्युरित्येव। ते चाधमरागाः—सौराष्ट्री; मेचबहुली; छायागौडः; कुरञ्जी; सैन्धवी; रामक्रिया; गौडी; देशी; मङ्गलकैशिकः; पूर्वी; सोमरागः; आन्धाली; फलमञ्जरी; शंकराभरणः; देवगान्धारः; दीपकः; नटनारायणः; भिन्नषड्जः; कुन्तलवराटी; सालगभैरवी; शुद्धबङ्गालः; नागध्वनिः; घण्टारवः; मार्गीहिन्दोलः; छायानाटी; देवक्रिया; गौडरागः; तोडी; वराली; तुरुष्कतोडी; सावेरीप्रमुखाः। मतान्तरं निगमयति—अन्ये केचनेति। मन्यन्त इति शेषः ॥ ४- ॥

एवं रागसामान्यलक्षणं मतान्तरैस्तत्संख्याविशेषं चोक्त्वा मेलप्रसङ्गोद्दिष्टानां रागविशेषाणां लक्षणानि गानकालांश्चोद्दिष्टक्रमेण वक्तुं प्रतिजानाति सार्धेनार्याद्वयेन—

यद्यपि देशीरागा देशे देशेऽन्यवेलाख्याः ॥ ५ ॥
पूर्णौडुवषाडवतास्वंशन्यासग्रहेषु चानियताः।
तदपि ग्रहादि पूर्णत्वादि च बहुमतजमनुसृत्य ॥ ६ ॥

[1] प्रबन्धोऽङ्गानि षट् तस्य स्वरश्च इति संगीतरत्नाकरपाठः

मेले प्रसङ्गत इहोद्दिष्टानां लक्षणं ससंक्षेपम् ।
तेषां पूर्वं वक्ष्यामि गानवेलासमायुक्तम् ॥ ७ ॥

यद्यपीति ! देशी रागा देशे देशेऽन्या भिन्नभिन्ना वेला गायनकाला आख्या नामानि च येषां ते तथोक्ताः । तथा पूर्णौडुवषाडवतासु सप्तस्वरात्मकत्वे ; पञ्चस्वरात्मकत्वे ; षट्स्वरात्मकत्वे चानियता व्यभिचारिणः ; तथा अंशन्यासग्रहेषु च ; अंशः प्रयोगे बहुलः स्वरः ; न्यासः गीतिसमाप्तिविधायी स्वरः ; ग्रहो गीतादिस्थः स्वरस्तेषु चानियता इत्येव ! यदप्येवं तदपि बहुमतजं नानाशास्त्रकारमतप्रतिपादितं ग्रहादि ग्रहांशन्यासान्पूर्णत्वादि च संपूर्णत्वौडुवत्वषाडवत्वानि चानुसृत्य प्रमाणीकृत्य, इह ग्रन्थे मेलप्रसङ्गत उद्दिष्टानां तेषां मुखार्यादिकरागविशेषाणां लक्षणपूर्वं प्रथमं ससंक्षेपमविस्तरं वक्ष्यामि कथयिष्यामि । उद्देशक्रमेणेति शेषः । कीदृग्लक्षणं गानवेलासमायुक्तं तेषां गानकालांश्च वक्ष्य इत्यर्थः । क्रियाविशेषणं वैतत् । देशीरागा यद्यपि तत्तद्देशेषु भिन्नभिन्नस्वरूपा भिन्नभिन्ननामानो भिन्नभिन्नगानकालाश्च सन्ति ; तथापि बहुमतेषु प्रसिद्धानि लक्षणान्यनुसृत्य प्रथमं तान्संक्षिप्य लक्षयिष्यामि । पश्चात्तु लक्ष्यप्रसिद्धिमनुसृत्य विस्तरं पञ्चमविवेके लक्षयिष्यामीति सार्धार्याद्वयस्यार्थः ॥ -६-७ ॥

तत्र मेलोद्देशक्रमेण मुखारीप्रभृतीन् सारङ्गान्तान् पञ्चसप्तति (७५) संख्यान् रागान्संक्षिप्य लक्षयति, तत्तद्गानकालांश्च कथयति सार्धाष्टत्रिंशद्भिरार्याभिः—

पूर्णा नित्यं गेया सांशन्यासग्रहा मुखारीयम् ।
पूर्णा तुरुष्कतोडी गांशादिः सङ्गवे कम्प्रा ॥ ८ ॥

पूर्णेति । मुखारी ; इयं पूर्णा सप्तस्वरात्मिका । स. षड्ज एवांशः बहुलप्रयोगो न्यासः समाप्तिविधायी ग्रह आदिस्थो यस्याः सा । नित्यं गेया सर्वदा गातव्या । इयं स्वमेले । तुरुष्कतोडी ; पूर्णा । गो गान्धार एवांशादय अंशन्यासग्रहा यस्याः सा । कम्प्रा स्वरसप्तकेऽपि कम्पनशीला । सङ्गवे पञ्चधाविभक्तदिनस्य द्वितीयविभागे ; गेयेति शेषः । इयं मुखारीमेले तोडीमेले वा ॥ ८ ॥

असपा तु रेवगुप्ती रिन्यासांशग्रहा भवेत्सायम् ।
सततं सामवराली सांशन्यासग्रहा पूर्णा ॥ ९ ॥

रेवगुप्तिस्तु; असपा षड्जपञ्चमहीना। रिर्ऋषभ एव न्यासोऽंशो ग्रहश्च यस्याः सा। सायं भवेत्; गेयेति शेषः। इयं स्वमेले। सामवराली; सांशन्यासग्रहा षड्जग्रहांशन्यासा; पूर्णा। सततं नित्यम्; गेयेति शेषः। इयमपि स्वमेले॥९॥

गांशग्रहा किल वसन्तवराली सर्वदारिपा सान्ता।
गाद्यंशसान्तपूर्णा तोडी कम्प्राणु सङ्गवरुक्॥ १० ॥

वसन्तवराली; किल प्रसिद्धौ। गांशग्रहा गान्धारांशग्रहा। अरिपा ऋषभपञ्चमहीना। सान्ता षड्जन्यासा। सर्वदा गेयेति शेषः। इयं सामवरालीमेले। तोडी; गाद्यंशसान्तपूर्णा गो गान्धार आदिर्ग्रहोंऽशश्च यस्याः सा चासौ सः षड्जोऽन्तो न्यासश्च यस्याः सा चासौ पूर्णा च। अण्वल्पं यथा स्यात्तथा कम्पनशीला; गान्धारमध्यमयोरित्यर्थः। सङ्गवे रुक् शोभा यस्याः सा। इयं स्वमेले॥ १० ॥

सांशन्यासग्रहका पूर्णोल्लसति निशि नादरामक्रीः।
धांशग्रहसंन्यासः संपूर्णो भैरवः प्रातः॥ ११ ॥

नादरामक्रीः; पूर्णा। सांशन्यासग्रहका षड्जांशन्यासग्रहा। निशि उल्लसति गाने शोभते। इयं स्वमेले। भैरवः; धांशग्रहः धैवतांशग्रहः स चासौ सन्यासः षड्जन्यासश्च। संपूर्णः। प्रातः पञ्चधाविभक्तस्याह्न आद्यभागे; गेय इति शेषः। अयं स्वमेले॥ ११ ॥

सन्यासग्रहमांशा स्वल्परिपा पौरवी लसेत्प्रातः।
सांशन्यासग्रहको वसन्त उषसि विलसेत्पूर्णः॥ १२ ॥

पौरवी; स्वल्परिपा अल्पप्रयोज्यऋषभपञ्चमा। सन्यासग्रहा षड्जग्रहन्यासा सा चासौ मांशा मध्यमांशा च। प्रातर्युक्तकाले लसेत् शोभेत; गान इति शेषः। इयं भैरवमेले। वसन्तः; पूर्णः। सांशन्यासग्रहकः षड्जग्रहांशन्यासः। उषसि प्रभाते विलसेच्छोभेत; गान इति शेषः। अयं स्वमेले॥१२॥

गेयः पूर्णष्टक्कः सांशन्यासग्रहो दिनस्यान्ते ।
मांशग्रह सन्यासोऽखिलो हिजेजस्तु सायाह्ने ॥ १३ ॥

टक्कः ; पूर्णः । सांशन्यासग्रहः षड्जग्रहांशन्यासः । दिनस्यान्ते दिनस्य पञ्चमे भागे गेयः । अयं वसन्तमेले । हिजेजस्तु ; अखिलः पूर्णः । मांशग्रहः मध्यमग्रहांशः स चासौ सन्यासः षड्जन्यासश्च । सायाह्ने ; गेय इति शेषः । अयमपि वसन्तमेले ॥ १३ ॥

हिन्दोलो रिपहीनो मांशः सान्तग्रहः सदोषसि वा ।
पोना वसन्तभैरव्युषसि तु सांशग्रहन्यासा ॥ १४ ॥

हिन्दोलः ; रिपहीनः ऋषभपञ्चमत्यागी । मांशः मध्यमांशः । सान्तग्रहः षड्जग्रहन्यासः । सदा नित्यमुषसि प्रातः काले वा ; गेय इति शेषः । अयमपि वसन्तमेले । वसन्तभैरवी तु ; पोना पञ्चमहीना । सांशग्रहन्यासा षड्जग्रहांशन्यासा । उषसि गेया । इयं स्वमेले ॥ १४ ॥

रिधहीना शाश्वतिकी सान्ता गांशग्रहा तु मारविका ।
मालवगौडः पूर्णः प्रदोषशोभोऽथ वा रहितः ॥ १५ ॥
गान्धारधैवताभ्यां निन्यासांशग्रहोऽथवा सान्तः ।

मारविका ; मारू इति लोके । सान्ता षड्जन्यासा । गांशग्रहा गान्धारग्रहांशा । शाश्वतिकी शश्वत्सर्वदा भवा, नित्यं गेयेत्यर्थः । इयं वसन्तभैरवीमेले । शाश्वतिकीति 'येषां च विरोधः शाश्वतिकः' (२-४-९) इति ज्ञापकाट्टिलोपाभावः । ठञन्तत्वात् ङीप् । मालवगौडः ; पूर्णः । अथवा गान्धारधैवताभ्यां रहितः । निन्यासांशग्रहः निषादग्रहांशन्यासः । अथवा सान्तः षड्जन्यासः । प्रदोषे त्रिमुहूर्तात्मके रजनीमुखे शोभा यस्य ; तत्र गेय इत्यर्थः । अयं स्वमेले ॥ १५ ॥

गौड्यधगा सायाह्ने र्यंशा चैत्ती च सान्तादिः ॥ १६ ॥

गौडी चैत्ती च ; अधगा धैवतगान्धाररहिता । र्यंशा ऋषभांशा । सान्तादिः षड्जग्रहन्यासा । अनयोरंशस्य ग्रहत्वमपि क्वचित् । सायाह्ने, गेयेति शेषः ।

अत्र केषांचित्तुल्यमेलग्रहांशन्यासत्वेऽपि स्वरूपभेदो वक्ष्यमाणवादनविशेषादिति ग्रन्थकृत्स्वयमेवाग्रे कथयिष्यति । इमे मालवगौडमेले ॥ १६ ॥

पूर्वी पूर्णा सान्ता गांशा षड्जग्रहा च सायाह्ने ।
पाडी सायाह्नार्हा गोना सांशग्रहन्यासा ॥ १७ ॥

पूर्वी ; पूर्णा । गांशा गान्धारांशा । सान्ता षड्जन्यासा ; षड्जग्रहा च । सायाह्ने ; गेयेति शेषः । इयमपि मालवगौडमेले । पाडी ; गोना गान्धारहीना । सांशग्रहन्यासा षड्जांशग्रहन्यासा । सायाह्नार्हा, गायन इति शेषः । इयमपि मालवगौडमेले ॥ १७ ॥

रिग्रहपांशः सान्तः सदागनिर्देवगान्धारः ।
गोण्डक्रिया धरिक्ता सांशन्यासग्रहा प्रातः ॥ १८ ॥

देवगान्धारः ; अगनिः गान्धारनिषादहीनः । रिग्रहो ऋषभग्रहश्चासौ पांशः पञ्चमांशश्च । सान्तः षड्जन्यासः । सदा सर्वदा, गेय इति शेषः । अयं मालवगौडमेल एव । गोण्डक्रिया ; धरिक्ता धैवतरहिता । सांशन्यासग्रहा षड्जग्रहांशन्यासा । प्रातः ; गेय इति शेषः । इयं मालवगौडमेल एव ॥ १८ ॥

गेया सदा कुरञ्जी धाल्पा सांशग्रहा च सन्यासा ।
अमनिरपराह्णगेया सांशन्यासग्रहा बहुली ॥ १९ ॥

कुरञ्जी ; सांशग्रहा षड्जग्रहांशा ; सन्यासा षड्जन्यासा च । धाल्पा अल्पधैवता । न तु गोण्डक्रियावत्सर्वथा धैवतहीना । सदा गेया । इयमपि मालवगौडमेल एव । बहुली ; अमनिः मध्यमनिषादहीना । सांशन्यासग्रहा षड्जग्रहांशन्यासा । अपराह्णे गेया पञ्चधाविभक्तस्य दिनस्य चतुर्थभागे गातव्या । इयमपि मालवगौडमेल एव ॥ १९ ॥

संपूर्णा रामक्रीः सांशान्तादिः सदापि गांशाद्या ।
गाद्यो धांशः सान्तो निविरहितः पावकः शश्वत् ॥ २० ॥

रामक्रीः ; संपूर्णा । सांशान्तादिः षड्जग्रहांशन्यासा । गांशाद्यापि ; अपि शब्दो विकल्पे ; गान्धारग्रहांशावेत्यर्थः । सदा सर्वदा, गेयेति शेषः । इयमपि मालवगौडमेल एव । पावकः; निविरहितो निषादहीनः । गाद्यो गान्धारग्रहः । धांशो धैवतांशः । सान्तः षड्जन्यासः । शश्वत्सर्वदा ; गेय इति शेषः । अयं मालवगौडमेल एव ॥ २० ॥

**आसावरी प्रगेया माद्यांशा सान्तिमा सदा पूर्णा ।**
**पञ्चम ऋषभविहीनः पांशन्यासग्रहो ह्युषसि ॥ २१ ॥**

आसावरी ; पूर्णा । माद्यांशा मध्यमग्रहांशा । सः षड्जोऽन्तिमो न्यासो यस्याः सा । सदा, प्रगेया प्रगातव्या । इयमपि मालवगौडमेल एव । पञ्चमः पञ्चमरागः ; ऋषभविहीनः । पांशन्यासग्रहः पञ्चमग्रहांशन्यासः । उषसि हि विभाते ; गेय इति शेषः । अयं मालवगौडमेल एव ॥ २१ ॥

**बङ्गालः शाश्वतिकः पूर्णः सांशग्रहश्च सन्यासः ।**
**उषसि तु पूर्णापा वा सांशाद्याद्या शुचिर्ललिता ॥ २२ ॥**

बङ्गालः ; पूर्णः । सांशग्रहः षड्जग्रहांशः ; सन्यासः षड्जन्यासश्च । शाश्वतिकः निरन्तरं गेयः । अयमपि मालवगौडमेल एव । शुचिः शुद्धा ललिता ; पूर्णा ; अपा पञ्चमरहिता वा । सांशाद्याद्या षड्जग्रहांशन्यासा । उषसि तु प्रभात एव ; गेयेति शेषः । इयं मालवगौडमेल एव ॥ २२ ॥

**गुर्जरिका रिन्यासग्रहांशका पवियुता प्रभातार्हा ।**
**परजो न्यल्पो गांशग्रहधगकम्प्रः सदा सान्तः ॥ २३ ॥**

गुर्जरिका ; पवियुता पञ्चमरहिता । रिन्यासग्रहा ऋषभग्रहांशन्यासा । प्रभातार्हा प्रभाते गानयोग्या । इयमपि मालवगौडमेल एव । परजः ; न्यल्पोऽल्पनिषादः । गांशग्रहः गान्धारग्रहश्चासौ धगकम्प्रश्च धैवतगान्धारयोः कम्पनशीलश्च । सान्तः षड्जन्यासः । सदा गेय इति शेषः । अयं मालवगौडमेल एव ॥ २३ ॥

**न्यल्पः प्रदोषशाली शुचिगौडः पांशसादिसन्यासः ।**
**पूर्णस्तु रीतिगौडो न्यंशान्त्यादिश्च सायाह्ने ॥ २४ ॥**

शुचिगौडः शुद्धगौडः; न्यल्पोऽल्पनिषादः । पांशः पञ्चमांशश्चासौ सादिः षड्जग्रहश्च स चासौ सन्यासः षड्जन्यासश्च । प्रदोषशाली रात्रिमुखे; गेय इत्यर्थः । अयमपि मालवगौडमेल एव । रीतिगौडस्तु ; पूर्णः । न्यंशान्त्यादिश्च निषादग्रहांशन्यासश्च । सायाह्ने, गेय इति शेषः । अयं स्वस्यैव मेले ॥ २४ ॥

**आभीर्यपि प्रदोषे पूर्णा गांशग्रहा च सन्यासा ।**
**गग्रहपांशः सन्यासो हम्मीरोऽल्पनी रात्रौ ॥ २५ ॥**

आभीरी ; पूर्णा । गांशग्रहा गान्धारग्रहांशा , सन्यासा षड्जन्यासा च । प्रदोषेऽपि, अपिश्चार्थे ; गेया इति शेषः । इयं स्वमेले । हम्मीरः; अल्पनिः निषादाल्पः । गग्रहः गान्धारग्रहश्चासौ पांशः पञ्चमांशश्च । सन्यासः षड्जन्यासः । रात्रौ गेयः । अयं स्वमेले ॥ २५ ॥

**न्यंशग्रहसन्यासो ऽल्पधो लसेन्निशि विहङ्गडः कम्प्रः ।**
**केदारो ऽल्परिधो निशि सन्यासो गांशगग्रहकः ॥ २६ ॥**

विहङ्गडः; अल्पो धो धैवतो यस्मिन्सः । न्यंशग्रहः निषादग्रहांशश्चासौ सन्यासः षड्जन्यासश्च । कम्प्रः स्वरेषु कम्पनशीलः । निशि रात्रौ लसेत् शोभते । अयं हम्मीरमेले । केदारः; अल्पौ रिधौ ऋषभधैवतौ यस्मिन्सः । गांशो गान्धारांशश्चासौ गग्रहकः गान्धारग्रहश्च । सन्यासः षड्जन्यासः । निशि रात्रौ गेयः । अयमपि हम्मीरमेले ॥ २६ ॥

**शुद्धवराटी पूर्णा सांशान्ता रिग्रहा च मध्याह्ने ।**
**सांशाद्यन्तोऽह्नोऽन्तः कम्प्रमनिर्देशकृत्पूर्णः ॥ २७ ॥**

शुद्धवराटी ; पूर्णा । सांशान्ता षड्जांशन्यासा ; रिग्रहा ऋषभग्रहा च । मध्याह्ने पञ्चधाविभक्तदिवसस्य तृतीयभागे ; गेयेति शेषः । इयं स्वमेले । देश-

कृद्देशकारः ; शुद्धरामक्रीरिति यावत् । सः पूर्णः । सांशाद्यन्तः षड्जग्रहांशन्यासः । कम्प्रौ कम्पनशीलौ मनी मध्यमनिषादौ यस्मिन्सः । अह्नोऽन्तर्मध्ये मध्याह्न इति यावत् । गेयेति शेषः । अयं स्वमेले ॥ २७ ॥

ललित उषसि संपूर्णो धांशः सान्तग्रहः पहीनो वा ।
सन्यासग्रहगांशाल्परिधा प्रातस्तु जैताश्रीः ॥ २८ ॥

ललितो विभासललितः ; संपूर्णः । पहीनो वा केषांचिन्मते पञ्चमोनः । धांशो धैवतांशः । सान्तग्रहः षड्जग्रहन्यासः । उषसि ; गेय इति शेषः । अयं देशकारमेले । जैताश्रीस्तु ; अल्पौ रिधौ ऋषभधैवतौ यस्यां सा ; सन्यासग्रहा षड्जग्रहन्यासा चासौ गांशा गान्धारांशा च । प्रातर्गेयेति शेषः । इयमपि देशकारमेले ॥ २८ ॥

सन्यासरिग्रहांशा संपूर्णा त्रावणी तु सायाह्ने ।
रिग्रहरिन्यासांशा गाल्पा देशी सदा गेया ॥ २९ ॥

त्रावणी तु ; संपूर्णा । सन्यासा षड्जन्यासा चासौ रिग्रहांशा ऋषभग्रहांशा च । सायाह्ने ; गेयेति शेषः । इयमपि देशकारमेले । देशी ; गाल्पा गान्धारदुर्बला । रिग्रहा ऋषभग्रहा चासौ रिन्यासांशा ऋषभांशन्यासा च । सा सदा गेया । इयं देशकारमेल एव ॥ २९ ॥

रींशग्रहः प्रदोषे श्रीरागो गतधगो न वा सान्तः ।
सग्रहसांशन्यासा मालाश्रीर्निग्रहांशा वा ॥ ३० ॥
पूर्णाथ वा रिधाल्पा गेयादौ मङ्गलाय शाश्वतिकी ।

श्रीरागः ; गतौ गधौ गान्धारधैवतौ यस्मात्सः । वा अथवा न गतधग इत्येव ; पूर्ण इत्यर्थः । रींशग्रहः ऋषभग्रहांशः । सान्तः षड्जन्यासः । प्रदोषे ; गेयेति शेषः । अयं स्वमेले । मालाश्रीः ; पूर्णा । अथवा रिधाल्पा ऋषभधैवतदुर्बला । सग्रहा षड्जग्रहा च । असौ सांशन्यासा षड्जांशन्यासा च सा । वा

अथवा निग्रहांशा निषादग्रहांशा । मङ्गलाय शुभार्थमादौ गीतारम्भे गेया; शाश्वतिकी सदा गातव्या । इयं श्रीरागमेले ॥ ३०- ॥

धन्याशिका रिधोना सांशन्यासग्रहा प्रातः ॥ ३१ ॥

धन्याशिका, धनाश्रीः ; रिधोना ; ऋषभधैवतदुर्बला । सांशन्यासग्रहा षड्जग्रहांशन्यासा ; प्रातर्गेयेति शेषः । इयं श्रीरागमेल एव ॥ -३१ ॥

भैरव्यंशन्यासग्रहसा रिपमुद्रिता सदा पूर्णा ।
नित्यं पमुद्रितारिधसांशन्यासग्रहा धवला ॥ ३२ ॥

भैरवी ; पूर्णा । अंशन्यासग्रहसा षड्जग्रहांशन्यासा । रिपमुद्रिता ऋषभपञ्चमयोर्मुद्रा ; मुद्रा नाम पञ्चमविवेके वक्ष्यमाणो वादनविशेषः संजातो यस्यां सा । सदा गेया । इयं श्रीरागमेल एव । धवला, धवलधनाश्रीरिति प्रसिद्धा ; अरिधा ऋषभधैवतोना चासौ सांशन्यासग्रहा षड्जग्रहांशन्यासा च । सा पमुद्रिता संजातपञ्चममुद्रा । नित्यं, गेयेति शेषः । इयमपि श्रीरागमेल एव ॥ ३२ ॥

सैन्धव्यगनिर्नित्यं सांशन्यासग्रहा लसद्गमका ।
साद्यन्तगांशपूर्णः प्रदोषगेयश्च कल्याणः ॥ ३३ ॥

सैन्धवी ; सिन्धोडेति भाषायाम् । अगनिर्गान्धारनिषादरहिता । सांशन्यासग्रहा षड्जग्रहांशन्यासा । लसद्गमकं वक्ष्यमाणवादनभेदो यस्यां सा । नित्यं ; गेयेति शेषः । श्रीरागमेल एवासौ । कल्याणः ; साद्यन्तः षड्जग्रहन्यासश्चासौ गांशः गान्धारांशश्च स चासौ पूर्णश्च । प्रदोषे गेयश्च । अयं स्वमेले ॥ ३३ ॥

पूर्णा सादिरनिर्वा काम्बोद्यंशान्तसा च सायाह्ने ।
अपगाह्ने देवक्रीः सांशन्यासग्रहापा वा ॥ ३४ ॥

काम्बोदी ; पूर्णा । अनिर्वा निषादरहिता वा । सादि । षड्जग्रहा । अंशान्तसा षड्जांशन्यासा च । सायाह्ने ; गेयः । इयं स्वमेले । देवक्रीः ; वा विकल्पेन अपा

पञ्चमरहिता ; षाडविता पूर्णा वा इत्यर्थः । सांशन्यासग्रहा षड्जग्रहांशन्यासा। अपराह्णे ; गेयेति शेषः । इयं काम्बोदीमेले ॥ ३४ ॥

मल्लारिर्नटयुगपि स धांशान्तादिरगनिश्च सङ्गवभाः ।
सान्तादिगांशपूर्णो मध्याह्ने पूर्वगौडः स्यात् ॥ ३५ ॥

मल्लारिः ; अगनिर्गान्धारनिषादरहितः । धांशान्तादिः धैवतग्रहांशन्यासा । सङ्गवभाः सङ्गवे शोभितगानः । अयं स्वमले । नटयुक् स मल्लारिरपि नटमल्लारिरपि ; मल्लारिवदगनिः, धांशान्तादिः ; सङ्गवाभाश्चेत्यर्थः । अयं मल्लारिमेले । पूर्वगौडः ; सान्तादिः षड्जग्रहन्यासश्चासौ गांशो गान्धारांशश्च स चासौ पूर्णश्च । मध्याह्ने ; गयेति शेषः । मल्लारिमेल एव ॥ ३५ ॥

सन्यासग्रहगांशा मनिहीनोषःस्मृतेह भूपाली ।
न्यल्पो मध्याह्नार्हो धांशन्यासग्रहो गौडः ॥ ३६ ॥

भूपाली ; मनिहीना मध्यमनिषादरहिता । सन्यासग्रहा षड्जग्रहन्यासा चासौ गांशा गान्धारांशा च ; इह उषसि स्मृता ; गेयत्वेनेति शेषः । मल्लारिमेल एव । गौडः ; न्यल्पो निषाददुर्बलः ; धांशन्यासग्रहः धैवतग्रहांशन्यासः । मध्याह्नार्हः ; गीत इति शेषः । मल्लारिमेल एव ॥ ३६ ॥

पूर्णः सांशन्यासः सग्रह उषसीह शंकराभरणः ।
सान्तादिगांशपूर्णो नटनारायण इने नमति ॥ ३७ ॥

शङ्कराभरणः ; पूर्णः । सांशन्यासः षड्जांशन्यासः । सग्रहः षड्जग्रहः। इह उषसि ; गेय इति शेषः । मल्लारिमेल एव । नटनारायणः ; सान्तादिः षड्जग्रहन्यासश्चासौ गांशश्च गान्धारांशश्च स चासौ पूर्णश्च । इने सूर्ये नमति स्रंसमानेऽपराह्णे गेय इत्यर्थः । अयं मल्लारिमेल एव ॥ ३७ ॥

नारायणगौड उषसि गांशन्यासग्रहस्तथा गतरिः ।
न्यंशन्यासग्रहकः पूर्णो निशयेव केदारः ॥ ३८ ॥

नारायणगौडः ; गतरिः ऋषभवर्जितः । तथा गांशन्यासग्रहः गान्धारग्रहांशन्यासः ; उषसि गेय इति शेषः । अयं मल्लारिमेल एव । केदारः द्वितीयकेदारः ; पूर्णः । न्यंशन्यासग्रहकः निषादग्रहांशन्यासः । निश्येव रात्रावेव ; गेयेति शेषः । अयं मल्लारिमेल एव ॥ ३८ ॥

**सालङ्कनाट आढ्यः सांशन्यासग्रहस्तु सायाह्ने ।**
**धांशान्तादिः पूर्णारिपापि वेलावली व्युष्टे ॥ ३९ ॥**

सालङ्कनाटः ; आढ्यः पूर्णः । सांशन्यासग्रहः षड्जग्रहांशन्यासश्च ; सायाह्ने गेयेति शेषः । मल्लारिमेल एव । वेलावली ; पूर्णा । अरिपा ऋषभपञ्चमरहिता वा । धांशान्तादिः धैवतग्रहांशन्यासा । व्युष्टे प्रभाते ; गेयेति शेषः । इयं मल्लारिमेल एव । 'व्युष्टं दिने प्रभाते च फले पर्युषितेऽपि च' इति विश्वः ॥३९॥

**अरिधो मांशन्यासग्रहः प्रगे मध्यमादिरुद्गेयः ।**
**असपा धांशन्यासग्रहा प्रभाते तु सावेरी ॥ ४० ॥**

मध्यमादिः ; अरिधः ऋषभधैवतहीनः मांशन्यासग्रहः मध्यमग्रहांशन्यासा ; प्रगे प्रभात उद्गेयः । इयं मल्लारिमेल एव । प्रगे इत्यव्ययम् ; 'सायं साये प्रगे प्रातः' इत्यमरः । सावेरी तु ; असपा षड्जपञ्चमहीना । धांशन्यासग्रहा धैवतग्रहांशन्यासा । प्रभाते ; गेयेति शेषः । इयं मल्लारिमेल एव ॥ ४० ॥

**सौराष्ट्री संपूर्णा सांशन्यासग्रहा च सायाह्ने ।**
**सामन्तः सायाह्ने सांशन्यासग्रहः पूर्णः ॥ ४१ ॥**

सौराष्ट्री ; संपूर्णा । सांशन्यासग्रहा षड्जग्रहांशन्यासा च । सायाह्ने ; गेयेति शेषः । इयं मल्लारिमेल एव । सामन्तः ; पूर्णः । सांशन्यासग्रहः षड्जग्रहांशन्यासः । सायाह्ने ; गेयेति शेषः । अयं स्वमेले ॥ ४१ ॥

**कर्णाटो निशि पूर्णो निन्यासांशग्रहः कचिद्रिधमुक् ।**
**पूर्णोऽड्डाणः पाद्यो धांशः सन्यास उज्झसेद्रात्रौ ॥ ४२ ॥**

कर्णाटः ; पूर्णः । क्वचित्कस्मिंश्चिन्मते रिधौ ऋषभधैवतौ मुञ्चतीति रिधमुक् । निन्यासांशग्रहः निषादग्रहांशन्यासः । निशि रात्रौ ; गेयेति शेषः । अयं स्वमेले । अड्डाणः ; पूर्णः । पाद्यः पञ्चमग्रहः । धांशौ धैवतांशः । सन्यासः षड्जन्यासः । रात्रौ ; गेयेति शेषः । अयं कर्णाटमेले ॥ ४२ ॥

नागध्वनिरिह पूर्णः सांशन्यासग्रहः सदा गेयः ।
शुचिवङ्गालः पूर्णो मांशन्यासग्रहो व्युष्टे ॥ ४३ ॥

नागध्वनिः ; इह पूर्णः ; सांशन्यासग्रहः षड्जग्रहांशन्यासः ; सदा गेयः । अयं कर्णाटमेल एव । शुचिवङ्गालः, शुद्धवङ्गालः ; पूर्णः । मांशन्यासग्रहः मध्यमांशन्यासग्रहः । व्युष्टे प्रभाते ; गेयेति शेषः । कर्णाटमेल एव ॥ ४३ ॥

पूर्णोऽथ वर्णनाटः सोंशन्यासग्रहो निशा गेयः ।
कम्प्रा तुरुष्कतोडी निशि मांशान्तग्रहा पूर्णा ॥ ४४ ॥

वर्णनाटः ; अथ पूर्णः । सांशन्यासग्रहः षड्जग्रहांशन्यासः । निशा गेयः रात्रौ गातव्यः । अयं कर्णाटमेल एव । तुरुष्कतोडी ; इराख इति भाषायाम् ; पूर्णा । मांशान्तग्रहा मध्यमांशग्रहन्यासा । कम्प्रा स्वरसप्तकेऽपि कम्पनशीला । निशि गेया । इयं कर्णाटमेल एव ॥ ४४ ॥

गांशन्यासग्रहकारोहे तु गतमनिरुषसि देशाक्षी ।
नाटः शुचिः प्रदोषे सांशन्यासग्रहः पूर्णः ॥ ४५ ॥

देशाक्षी ; आरोहे तु गतमनिः मध्यमनिषादरहिता ; अवरोहे तु तत्सहितापीत्यर्थः । तुरेवार्थे । गांशन्यासग्रहका गान्धारग्रहांशन्यासा । उषसि ; गेयेति शेषः । इयं स्वमेले । शुचिर्नाटः शुद्धनाटः ; पूर्णः । सांशन्यासग्रहः षड्जग्रहांशन्यासः । प्रदोषे ; गेयेति शेषः । अयं स्वमेले ॥ ४५ ॥

संपूर्णः सारङ्गः सांशन्यासग्रहोऽपराह्णरुचिः ।
लक्षणसमास एवं दृष्ट्वा नानामतान्युक्तः ॥ ४६ ॥

सारङ्गः ; संपूर्णः । सांशन्यासग्रहः षड्जग्रहांशन्यासः । अपराह्णे रुचिः शोभा यस्य सः ; गीयत इति शेषः । अयं स्वमेले । निगमयति—लक्ष्मणेति । लक्षणसमास उद्दिष्टरागलक्षणसंक्षेपः ; नानामतानि दृष्ट्वा एवमुक्त इति ॥ ४६ ॥

मेलग्रहादिपूर्णत्वाद्यैक्येऽप्येषु वादनभिदा भित् ।
वर्ज्यस्वरो ऽवरोहे द्रुतगीतो नेह रक्तिहरः ॥ ४७ ॥

मेलग्रहेति । येषां तु रागाणां स एव मेलः त एव ग्रहांशन्यासाः । तदेव पूर्णत्वाद्यन्यतमम् ; तेषां भेदे हेतुमाह—मेलग्रहेति । एषु रागेषु मेलनग्रहादिभिः पूर्णत्वादिना च यदैक्यं तस्मिन्नपि सति वादनभिदा वक्ष्यमाणप्रतिहत्यादिवादनभेदेन भित् भेदः ज्ञेय इति शेषः । यथा गौड्यपेक्षया चैत्या प्रतिहतिकृतो भेदः । एवमन्यत्रापि । त्यज्यस्वरस्याप्यवरोहे वादनं रक्तिघ्नं न भवतीत्याह—वर्ज्यस्वर इति । इह षाडवेष्वौडुवेषु वा रागेष्वरोहे द्रुतगीतः त्वरया गीतो वादितो वा वर्ज्यस्वरः रक्तिघ्नो न भवेदिति शेषः ॥ ४७ ॥

सकलकलेत्युपनामकसोमकविहिते हितेऽल्पबुद्धीनाम् ।
रागाणां च चतुर्थो रागविबोधे विवेकोऽयम् ॥ ४८ ॥

सकलकलेति । रागाणां विवेकः तत्प्रतिपादनसंबन्धी चतुर्थश्च । शिष्टं स्पष्टम् ॥ ४८ ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ।
रागविबोधविवेकश्चतुर्थ एवं मनाग्विवृतः ॥

इति रागविबोधे चतुर्थो विवेकः समाप्तः ॥ ४ ॥

## पञ्चमो विवेकः

एवं मुखारीप्रभृति सारङ्गान्तान्रागान्मेलक्रमेण ससंक्षेपं लक्षयित्वा तेषां मध्ये प्रभातप्रातःसङ्गवमध्याह्नापराह्णसायाह्नप्रदोषरात्रिकालेषु सर्वकाले च गातव्यानां केषांचन सविस्तरलक्षणार्थं प्रभातादिकालक्रमेणोद्देशं प्रतिजानाति—

तेष्विति मेलक्रमतः समासतो लक्षितेष्वहं कतिचित् ।
तानुद्दिशामि कालक्रमतो व्यासेन लक्षयितुम् ॥ १ ॥

तेष्विति । मेलक्रमतः समासत इति लक्षितेषु तेषु तेषु कतिचित्तान् व्यासेन विस्तरेण लक्षयितुं कालक्रमत उद्दिशामि नाममात्रेण कीर्तयामि ॥ १ ॥

एकपञ्चाशत उद्देशत आह शंकरभूषणेत्यादिभिरष्टभिः—

शंकरभूषणवेलावल्यौ भूपालिका शुचिर्ललिता ।
सवसन्तो हिन्दोलो विभासललितश्च जैताश्रीः ॥ २ ॥
धन्याशीभैरवपौरविकास्तोडी तुरुष्कतोड्यन्या ।
मल्लारिर्नटपूर्वः स च गोण्डः पूर्वगौडश्च ॥ ३ ॥
देशीकारः शुद्धवराटी बहुली ततश्च सारङ्गः ।
नटनारायणदेवक्रियौ च सौराष्ट्रिका गौडी ॥ ४ ॥
चैत्तीपूर्वीत्रावणि काम्बोदी शुद्धनाट आभीरी ।
कल्याणः श्रीरागो मालवगोडोऽथ गौडश्च ॥ ५ ॥
कर्णाटाड्डाणौ वर्णनाटहम्मीरकौ च केदारः ।
सविहङ्गड इत्युष आद्यष्टसु कालेषु गातव्याः ॥ ६ ॥

**शंकरभूषणेति**। शंकरभूषणः स च वेलावली च ते; शुचिर्ललिता सवसन्तो वसन्तसहितः; वसन्तो हिन्दोलश्चेत्यर्थः। विभासललितः विभासभेदोऽन्यो ललितः। धन्याशीभैरवपौरविकैकं पदम्। अन्या तुरुष्कतोडी हुसेनीति लोके। मल्लारिः नटपूर्वः; स च नटमल्लारिश्च; पूर्वगौडश्च पूर्व्या इति लोके। देशीकारः, शुद्धरामक्रीः। ततश्च तत्परं च नटनारायणदेवक्र्यौ च; सौराष्ट्रिका सोरठीति लोके। चैत्ती पूर्वी त्रावणी इति तिसृणां समाहारद्वंद्वे नपुंसकत्वाद्ध्रस्वः। कर्णाटश्च अड्डाणश्च तौ। वर्णनाटहम्मीरकौ च। केदारः सविहङ्गडः केदारो विहङ्गडश्चेत्यर्थः। शिष्टं स्पष्टम्। इत्येत उष आद्यष्टसु उष आदयश्च ते अष्ट च तेषु गातव्याः॥ २–६॥

तत्र कस्मिन्काल इत्यत्राह द्वाभ्यां मात्रासप्तकोनाभ्याम्—

**शंकरभूषाद्या उषसि हि जैताश्रीमुखास्ततः प्रातः।**
**सङ्गव इह तोड्याद्या मध्याह्ने गोण्डकप्रमुखाः॥ ७॥**
**अपराह्णे बहुलीतः प्रभृति तु सायाह्नके च सौराष्ट्र्याः।**
**शुचिनाटतः प्रदोषे निशि कर्णाटात्सदा त्वेते॥ ८॥**

**शंकरभूषाद्या इति**। शंकरभूषा शंकराभरणः; तदाद्याः सप्तेत्यर्थात्; उषसि हि प्रभात एव; गातव्या इति शेषः। ततो जैताश्रीमुखा एतत्प्रभृतयश्चत्वार इत्यर्थात्; प्रातः पञ्चधाविभक्तदिनस्य पूर्वभागे; इह तोड्याद्याः तोडीप्रमुखाश्चत्वार इत्यर्थात्; सङ्गवे एव तस्यैव द्वितीयभागे; गोण्डप्रमुखाः गोण्डादयश्चत्वार इत्यर्थात्; मध्याह्न एव तस्यैव तृतीयभागे; बहुलीतः प्रभृति तु तामारभ्य चत्वारो रागा इत्यर्थात्; अपराह्णे तस्यैव चतुर्थभागे; सौराष्ट्र्याश्च प्रभृतीत्येव, सौराष्ट्रीप्रभृति षड्रागाः सायाह्नके तस्यैव पञ्चमभागे; शुचिनाटतः प्रभृतीत्येव, शुद्धनाटाद्याः षड्रागाः प्रदोषे त्रिमुहूर्तात्मके रजनीमुखे; कर्णाटात प्रभृतीत्येव, कर्णाटः प्रभृति षड्रागाः निशि रात्रौ; एवमेते प्रभातादिष्वष्टसु गातव्या इत्यर्थः। अत्र प्रतिकालमप्युद्देशो क्रमेणैवेत्यपि ज्ञेयम्। सर्वदा गातव्यानाह—सदा त्वेत इति। एते तु रागाः सदा निरन्तरं गातव्याः॥ ७, ८॥

तानेव दशरागानाह—

मालाश्रीर्धवलाथ मुखारी रामक्रिया सपावकका ।
सैन्धव्यासावरिका गान्धारो मारवी परजः ॥ ९ ॥

मालाश्रीरिति । अथ च परम्; सपावका रामक्रिया, रामक्रिया पावकश्चेत्यर्थः । आसावरिका आसावरी । शिष्टं स्पष्टम् ॥ ९ ॥

प्रभातादिकालगानेऽपि विशेषमाह—

निजनिजकालेऽप्येते क्रमतो गेया अथ क्रमाद्विविधैः ।
आर्याच्छन्दोबद्धैर्लक्ष्य एतान्परं रूपैः ॥ १० ॥

निजनिजेति । निजनिजकाले स्वस्वसमयेऽपि एते क्रमत उद्देशक्रमेण गेयाः । यथा प्रभाते गेयेष्वपि पूर्वं शंकराभरणो गेयः; ततो वेलावली; ततोऽपि भूपालीत्यादि । एवं प्रातरादिकाले गेयेष्वप्यथ रागाणां लक्षणं रूपद्वारा प्रतिजानीते—अथ क्रमादिति । अथ उद्देशानन्तरमेतान् शंकराभरणादीन्क्रमाद्रूपैः परं स्वरूपैरेव लक्षये लक्षयिष्यामि; तत्तद्रूपविशेषेषु लक्षितेषु ते ते एव रागा लक्षिता भविष्यन्तीत्यर्थः । कीदृशैः? आर्याच्छन्दोबद्धैः आर्याच्छन्दोयोग्यसरिगमादिवर्णप्रतिपादितैः । विविधैः प्रतिहतिमुखवादनविशेषवशान्नानाप्रकारैर्वक्ष्यमाणदेवतारूपेष्वप्यार्याच्छन्दसा प्रतिपादितं गौरादिभावेन नानात्वं च ज्ञेयम् ॥ १० ॥

तत्र रूपस्य सामान्यलक्षणमाह—

सुस्वरवर्णविशेषं रूपं रागस्य बोधकं द्वेधा ।
नादात्म च देवमयं तत्क्रमतोऽनेकमेकं तु ॥ ११ ॥

सुस्वरेति । सुशोभनो रञ्जक इति यावत्; स्वराणां षड्जादीनाम्; वर्णविशेषः उक्तो वक्ष्यमाणश्च गानविशेषो यस्मिंस्तादृशं सत् रागस्य बोधकं ज्ञापकं रूपम् । येन रञ्जकेन विशिष्टगानस्वरसमुदायेन रागो ज्ञायते; तत्तद्रूपाणां निरूपणाद्रूपमित्यर्थः । वक्ष्यमाणदेवतापक्षे तु—सुशोभनः स्वरः कण्ठस्वरः; वर्णो गौरत्वादिः; विशेषः अवस्थालंकारादिश्च यस्य तादृशं सत् रागस्य देवदेहधारिणो बोधकं रूपं ज्ञेयम् । एतदेव स्फोटयितुं तस्य द्वैविध्यमाह—द्वेधेति । तद्रूपमिति शेषः । द्वेधा द्विप्रकारम् । प्रकारावेवाह—नादात्मेति । नादात्मकं

षड्जादिसमूहरूपं ध्वनिमयम्। देवमयं च देवतादेहमयं च। तद् द्विविधं रूपं क्रमतोऽनेकमेकं च; एकस्यैव रागस्य नादमयं तु रूपमनेकम्; देवतामयं त्वेकमेवेत्यर्थः ॥ ११ ॥

प्रथमं नादमयस्य रूपस्य प्रपञ्चनं प्रतिजानाति—

तत्र विविच्यत आद्यं लोकव्यवहारविश्रुतं पूर्वम्।
अपि यस्य कस्यचिद्य पर्यायैः स्वरसमूहस्य ॥ १२ ॥

तत्रेति। तत्र तयोर्मध्य आद्यं नादात्मक रूपं पूर्वं विविच्यते; सोपकरणसामग्रीकं प्रकाश्यते। पश्चाद्देवतामयं प्रकाशयिष्यत इत्यर्थः। कीदृशम्? लोकव्यवहारविश्रुतम्—इदमस्य रागस्य रूपं साधु, इदं साधुतरम्; इति लोकैर्व्यवह्रियमाणमित्यर्थः। तस्य लोके अनियततया आलापादिष्वन्यतमस्य वाचकतामाह—अपीति। यत् यस्य कस्यचिदपि स्वरसमूहस्य पर्यायैः आलापादिशब्दैर्यद्यदुच्यते तत्तद्रूपशब्देनापीत्यर्थः ॥ १२ ॥

तदेव स्पष्टयन्निगमयति—

आलापमूर्च्छनाशुचितानालंकारकूटतानाद्याः।
तत्संकराश्च रूपेऽग्रे ज्ञेयाः क्वचित्केऽपि ॥ १३ ॥

आलापेति। तत् ततो हेतोः, आलापाः पूर्वोक्ताः; मूर्च्छना उत्तरमन्द्राद्याः; शुचितानाः शुद्धतानाः; अलंकाराः प्रसन्नाद्याः; कूटतानाः स्वरव्युत्क्रमाः; आद्यपदेनालप्तिः; तत्स्थानचतुष्टयेऽन्यतमं च; संकराः तद्व्यामिश्रणानि च रूपेः अग्रे रूपविशेषनिरूपणप्रसङ्गे ज्ञेयाः। किं सर्वेऽपि सर्वत्र? नेत्याह—क्वचित्केऽपीति। एतेषु मध्ये यथारागं क्वचन क्वचन केऽपि केऽपि तदन्यतमा इत्यर्थः ॥ १३ ॥

सुस्वरवर्णविशेषमिति रूपलक्षणे विशेषपदसूचितवादनभेदेषु कतिचन स्वकल्पितसंज्ञान्वादनभेदानुद्देष्टुं प्रतिजानाति—

वादनभिदास्वनन्तास्वभिधास्ये विंशतिं स्फुटां देश्याम्।
स्थाने च द्वे द्वाविंशत्या नाम्नां प्रकल्पितया ॥ १४ ॥

वादनेति। अनन्तासु वादनभिदासु तिरिपस्फुरितावाख्येषु गमकस्थाय संकीर्णभेदेषु मध्ये देश्यां स्फुटां प्रसिद्धां विंशतिवादनभिदामित्यर्थात; च परं द्वे स्थाने मन्द्राद्यन्यतमे अभिधास्ये उद्देक्ष्यामि। कया? नाम्नां सञ्ज्ञानां प्रकल्पितया द्वाविंशत्या; वादनभेदानां विंशतेर्नामानि स्थानद्वयस्य च द्वे नामन्युद्देक्ष्यामी-त्यर्थः ॥ १४ ॥

उद्देशमेवाह द्वाभ्यां पादोनाभ्याम्—

प्रत्यान्वपूर्वहतयः पीडादोलनविकर्षगमकानि।
कम्पो घर्षणमुद्रे स्पर्शो नैम्नयप्लुतिद्रुतयः ॥ १५ ॥
परतोच्चताथ निजते शमभृदुकठिनानि विंशतिर्द्व्यधिका।
वादनभेदपदानां वीणायां लक्षणं क्रमतः ॥ १६ ॥

प्रत्यान्वपूर्वेति। प्रत्यान्वाः पूर्वे याभ्यस्ताश्च ता हतयश्च; प्रतिहतिः, आहतिः, अनुहतिः, अहतिरित्यर्थः। पीडादोलनविकषगमकानीति चतुर्णां द्वंद्वः। कम्पो घर्षणं च मुद्रा च ते। स्पर्शो नैम्न्यं च प्लुतिश्च द्रुतिश्च ताः। परता उच्चता। अथ चार्थे। निजते निजताद्वयं च। शमश्च मृदु च कठिनं च तानि। इतीति शेष। वादनभेदाश्च स्थाने च तेषां द्व्यधिका विंशतिः। तत्र प्रतिहत्यादिशमान्तानि वादनभेदनामानि मृदुकठिने तु स्थाननामनी इति ज्ञेयम्। अथ कण्ठसंवादिन्यां वीणायां तान् क्रमेण लक्षयितु प्रतिजानाति—वीणायामिति। अस्य लक्षणं क्रमतो भेदानां च कथ्यत इति शेषः ॥ १५, १६ ॥

तत्र प्रतिहतिं लक्षयति—

प्रतिहतिरन्तर्द्रुतमुच्छलनवतो हतियुगाद्गभीररवः।
आहतिरन्यध्वनने हतिं विनान्यस्वराश्रयः ॥ १७ ॥

प्रतिहतिरिति। हतियुगात्तन्त्रीनखाघातद्वयाद्धेतोः गभीररवः हुंकार-शब्दानुकारी गम्भीरध्वनिः प्रतिहतिः; उच्यत इति शेषः सर्वत्र। कीदृशात्? अन्तर्मध्ये द्रुतमतिशीघ्रमुच्छलनवतः। एकमाघात कृत्वा अतिशीघ्रं किंचि-

दङ्गुल्युच्छालनेन किंचिदेव पूर्वस्वरप्रदर्शने तत्समकालं द्वितीयाघाताद्धुंकार-समध्वनिः प्रतिहतिरित्यर्थः (१)। अङ्गुलीस्थापनेन वादनविधिमग्रे कथयिष्यति। आहतिं लक्षयति—आहतिरिति। अन्यध्वनने अपरस्वरस्य रणने हतिं नखाघातं विना तेनैव ध्वननेन अन्यस्वराश्रावः, अपरस्वरस्य आश्रावः श्रवणं प्रदर्शनमिति यावत्। सा आहतिः। येन केन प्रकारेण पूर्वस्वरस्य ध्वनने हतिं विना तेनैव ध्वननेनाव्यवहितस्य व्यवहितस्य वा परस्वरस्य प्रदर्शनम्; तथा तादृश एव परस्वरस्य ध्वननेन तेनैव ध्वननेनाव्यवहितस्य व्यवहितस्य वा पूर्वस्वरस्य प्रदर्शनमाहतिरित्यर्थः (२) ॥ १७ ॥

अनुहतिं लक्षयति—

अनुहतिरेकहतेः प्रतिहतिवत्सैव त्वहतिरघातात्स्यात्।
पीडापीड्य विमुक्तिर्दोलनमाकर्षणागमने ॥ १८ ॥

अनुहतिरिति। एकनखाघातादेव प्रतिहतिवत्, गम्भीरध्वनिरिति शेषः। एकमेवाघातं कृत्वा अतिशीघ्रमेव किंचिदङ्गुलेरुच्छालनेन किंचित्पूर्वस्वरं प्रदर्श्य तदाच्छादनेन हुंकारसमध्वनिरनुहतिरित्यर्थः(३)॥ अहतिं लक्षयति—सैव त्वहतिरिति। सैवानुहतिरेवाघातात् नखाघातं विना गम्भीरध्वनिरित्येवाहतिः स्यात्। सर्वथा नखाघातं विनैवाहतिः ध्वननविशेषेण वक्ष्यमाण-घर्षणध्वननविशेषेण वा पूर्ववत् हुंकारशब्दानुकारिगम्भीरध्वनिकरणमहतिरित्यर्थः(४) ॥ पीडां लक्षयति—पीडेति। आपीड्य विमुक्तिः; पीडा अङ्गुल्युदरेणाग्रिमस्वरं गाढं संस्पृश्य तत्समकालमेव पूर्वस्वरप्रदर्शनं पीडेत्यर्थः(५) ॥ दोलनं लक्षयति—दोलनमिति। आकर्षणं विकर्षणं च आगमनं निवर्तनं च ते दोलनम्। एकेनैवाघातेन परस्वरस्य किंचिन्न्यूनैकश्रुतिपर्यन्तं विकर्षणं कृत्वा शनैस्तथैव निवर्तनं पूर्वत्रावस्थानं दोलनमित्यर्थः(६) ॥ १८ ॥

विकर्षणं लक्षयति—

आकर्षणं विकर्षो दोलनमेव हि पुनः पुनर्गमकम्।
स्पष्टः कम्पो घर्षणमेकहतिर्द्राक्स्वरान्तरकृत् ॥ १९ ॥

